त्रयाणामानुलोम्यं हि प्रातिलोम्यं न विद्यते ११
प्रातिलोम्येन यो याति न तस्मात् पापकृत्तमः
मेखलाजिनदण्डेन ब्रह्मचारी तु लक्ष्यते १२
गृहस्थो देवयज्ञाद्यैर्नखलोम्ना वनाश्रितः
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक्पृथक् १३
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती नचाश्रमी
उक्त कर्म क्रमोनोक्तो न कालो मुनिभिः स्मृतः
द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत् १४
इति दाक्षे धर्मशास्त्रे प्रथमोऽध्यायः

अथ द्वितीयोऽध्यायः
प्रातरुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने
तत्सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम् १
उदयास्तमयं यावन्न विप्रः क्षणिकोभवेत्
नित्यनैमित्तिकैर्मुक्तः काम्यैश्चान्यैरगर्हितैः २
यः स्वकर्म परित्यज्य यदन्यत्कुरुते द्विजः
अज्ञानाद्यदि वा मोहात्स तेन पतितो भवेत् ३
दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ४
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्
विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषतः ५
उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ६
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ७
क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च

अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ८
नानास्वेदसमाकीर्णः शयनादुत्थितः पुमान्
अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन ९
प्रातरुत्थाय यो विप्रः प्रातस्नायी भवेत् सदा
समस्तजन्मजं पापं त्रिभिर्वर्षैर्व्यपोहति १०
उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ११
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्
सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् १२
स्नानादनन्तरं तावदुपस्पर्शनमुच्यते
अनेन तु विधानेन आचान्तः शुचिता मियात् १३
प्रक्षाल्य पादौ हस्तौ च त्रिः पिवेदम्बु वीक्षितम्
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततोमुखम् १४
संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत्
ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत् १५
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः १६
कनिष्ठाङ्गुष्ठया नाभिं हृदयञ्च तलेन वै
सर्व्वाभिस्तु शिरः पश्चाद्वाहू चाग्रेण संस्पृशेत् १७
सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः
सन्ध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः १८
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु १९
यदन्यत्कुरुते कर्म न तस्य फलमश्नुते
सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते
स्वयं होमे फलं यत्तु तदन्येन न जायते २०

ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि २१
देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्
देवकार्य्याणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे २२
पितॄणामपराह्णे च कार्य्याण्येतानि यत्नतः
पौर्व्वाह्णिकन्तु यत् कर्म यदि तत्सायमाचरेत् २३
न तस्य फलमाप्नोति बन्ध्यास्त्रीमैथुनं यथा
दिवसस्याद्यभागे तु सर्वमेतद्विधीयते २४
द्वितीये च तथाभागे वेदाभ्यासो विधीयते
वेदाभ्यासो हि विप्राणां परमं तप उच्यते २५
ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु सः
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः २६
ततोदानञ्च शिष्येभ्यो वेदाभ्यासो हि पञ्चधा
समित्पुष्पकुशादीनां स कालः समुदाहृतः २७
तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम्
पिता माता गुरुर्भार्य्या प्रजादीनाः समाश्रिताः २८
अभ्यागतोऽतिथिश्चान्यः पोष्यवर्ग उदाहृतः
ज्ञातिर्बन्धुजनः क्षीणस्तथानाथः समाश्रितः २९
अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ३०
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत्
सार्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः
ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ३१
स जीवति य एवैको बहुभिश्चोपजीव्यते
जीवन्तो मृतकाश्चान्ये य आत्मम्भरयो नराः
वह्वर्थे जीव्यते कश्चित्कुटुम्बार्थे तथा परैः ३२



online Sanskrit books

आत्मार्थेऽन्यो न शक्नोति स्वोदरेणापि दुःखितः
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता ३३
अदत्तदाना जायन्ते परभाग्योपजीविनः
यद्ददाति विशिष्टेभ्यो यज्जुहोति दिने दिने ३४
तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति
चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ३५
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले
नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ३६
तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा
मलापहरणं पश्चान्मन्त्रवत्तु जले स्मृतम् ३७
सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्तिताः
मार्जनं जलमध्ये तु प्राणायामो यतस्ततः ३८
उपस्थानं ततः पश्चात्सावित्र्या जप उच्यते
सविता देवता यस्या सुखमग्निस्त्रिधा स्थितः ३९
विश्वमित्रऋषिश्छन्दो गायत्री सा विशिष्यते
पञ्चमे च तथाभागे संविभागो यथार्हतः ४०
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते
देवैश्चैव मनुष्यैश्च तिर्य्यग्भिश्चोपजीव्यते ४१
गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही
त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते ४२
तेनैव सीदमानेन सीदन्तीहेतरे त्रयः
मूलप्राणो भवेत् स्कन्दः स्कान्दाच्छाखाः सपल्लवाः ४३
मूलेनैव विनष्टेन सर्वमेतद्विनश्यति
तस्मात्सर्वप्रयत्नेन रक्षितव्यो गृहाश्रमी ४४
राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्वदा
गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी ४५

न चैव पुत्रदारेण स्वकर्मपरिवर्ज्जितः
अस्नात्वा चाप्यहुत्वा चाजप्त्वाऽदत्त्वा च मानवः ४६
देवादीनामृणी भूत्वा नरकं प्रतिपद्यते
एक एव हि भुङ्क्तेऽन्नमपरोऽन्नेन भुज्यते ४७
न भुज्यते स एवैको योभुङ्क्तेऽन्नं ससाक्षिणा
विभागशीलो योनित्यं क्षमायुक्तोदयापरः ४८
देवतातिथिभक्तश्च गृहस्थः स तु धार्मिकः
दया लज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता ४९
एते यस्य गुणाः सन्ति स गृही मुख्य उच्यते
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ५०
भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्
इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् ५१
अष्टमे लोकयात्रा तु बहिः सन्ध्या ततः पुनः
होमो भोजनकञ्चैव यच्चान्यद्गृहकृत्यकम् ५२
कृत्वा चैवं ततः पश्चात् स्वाध्यायं किञ्चिदाहरेत्
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ५३
यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते
नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ५४
तथा तथैव कार्य्याणि न कालस्तु विधीयते
अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नेव तु लीयते ५५
तस्मात्सर्वप्रयत्नेन कर्त्तव्यं सुखमिच्छता
सर्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत्
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ५६

इति दाक्षे धर्मशास्त्रे द्वितीयोऽध्यायः

# अथ तृतीयोऽध्यायः
## गृहस्थाश्रमवर्णनम्

सुधा नवगृहस्थस्य शब्दयामि नवैव तु
तथैव नव कर्माणि विकर्माणि तथा नव १
प्रच्छन्नानि नवान्यानि प्रकाश्यानि तथा नव
सफलानि नवान्यानि निष्फलानि नवैव तु २
अदेयानि नवान्यानि वस्तुजातानि सर्वदा
नवका नव निर्दिष्टा गृहस्थोन्नतिकारकाः ३
सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ४
अभ्युत्थानमिहागच्छ पृच्छालापप्रियान्वितः
उपासनमनुव्रज्या कार्याण्येतानि यत्नतः ५
ईषद्दानानि चान्यानि भूमिरापस्तृणानि च
पादशौचं तथाभ्यङ्गमाश्रयः शयनन्तथा ६
किञ्चिच्चान्नं यथाशक्ति नास्यानश्नन् गृहे वसेत्
मृज्जलं चार्थिने देयमेतान्यपि सदा गृहे ७
सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम्
वैश्वदेवं तथातिथ्यमुद्धृतञ्चापि शक्तितः ८
पितृदेवमनुष्याणां दीनानाथतपस्विनाम्
मातापितृगुरूणाञ्च संविभागो यथार्हतः ९
एतानि नव कर्माणि विकर्माणि तथा पुनः
अनृतं पारदार्य्यञ्च तथाभक्ष्यस्य भक्षणम् १०
अगम्यागमनापेयपानं स्तेयञ्च हिंसनम्
अश्रौतकर्माचरणं मित्रधर्मवहिष्कृतम् ११
नवैतानि विकर्माणि तानि सर्वाणि वर्जयेत्
आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् १२

तपोदानावमानौ च नव गोप्यानि यत्नतः
प्रायोग्यमृणशुद्धिश्च दानाध्ययनविक्रयाः १३
कन्यादानं वृषोत्सर्गो रहः पापमकुत्सनम्
प्रकाश्यानि नवैतानि गृहस्थाश्रमिणस्तथा १४
मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि
दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत् १५
धूर्त्ते वन्दिनि मन्दे च कुवैद्ये कितवे शठे
चाटुचारणचौरभ्यो दत्तं भवति निष्फलम् १६
सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्
क्रमायातञ्च निक्षेपः सर्वस्वञ्चान्वये सति १७
आपत्स्वपि न देयानि नव वस्तूनि सर्वदा
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः १८
नवनवकवेत्तारमनुष्ठानपरं नरम्
इह लोके परे च श्रीः स्वर्गस्थञ्च न मुञ्चति १९
यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता
सुखदुःखानि तुल्यानि यथात्मनि तथा परे २०
सुखं वा यदि वा दुःखं यत्किञ्चित् क्रियते परे
ततस्तत्तु पुनः पश्चात्सर्वमात्मनि जायते २१
न क्लेशेन विना द्रव्यं द्रव्यहीने कुतः क्रिया
क्रियाहीने न धर्मः स्याद्धर्महीने कुतः सुखम् २२
सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम्
तस्माद्धर्मः सदा कार्य्यः सर्ववर्णैः प्रयत्नतः २३
न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम्
दानञ्च विधिना देयं काले पात्रे गुणान्विते २४
समद्विगुणसाहस्रमानन्त्यञ्च यथाक्रमम्
दाने फलविशेषः स्याद्धिंसायां तावदेव तु २५



online Sanskrit books

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे
सहस्रगुणमाचार्य्ये त्वनन्तं वेदपारगे २६
विधिहीने तथा पात्रे यो ददाति प्रतिग्रहम्
न केवलं तद्विनश्येच्छेषमप्यस्य नश्यति २७
व्यसनप्रतिकाराय कुटुम्बार्थञ्च याचते
एवमन्विष्य दातव्यमन्यथा न फलं भवेत् २८
मातापितृविहीनन्तु संस्कारोद्वहनादिभिः
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ३०
न तच्छेयोऽग्निहोत्रेण नाग्निष्टोमेन लभ्यते
यच्छ्रेयः प्राप्यते पुंसा विप्रेण स्थापितेन तु ३१
यद्यदिष्टतमं लोके यच्चापि दयितं गृहे
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ३२
इति दाक्षे धर्मशास्त्रे तृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः
पत्नीमूलं गृहं पुंसां यदि च्छन्दोऽनुवर्तिनी
गृहाश्रमसमं नास्ति यदि भार्य्या वशानुगा १
तया धर्मार्थकामानां त्रिवर्गफलमश्नुते
प्राकाम्ये वर्त्तमाना तु स्नेहान्नतु निवारिता २
अवश्या सा भवेत्पश्चाद्यथा व्याधिरुपेक्षितः
अनुकूला नवाग्दुष्टा दक्षा साध्वी प्रियम्वदा ३
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी ४
अनुकूलकलत्रो यस्तस्य स्वर्ग इहैव हि
प्रतिकूलकलत्रस्य नरको नात्र संशयः ५
स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम्
रक्त एको विरक्तोऽन्यस्तस्मात् कष्टतरं नु किम् ६

गृहवासः सुखार्थाय पत्नीमूलं गृहे सुखम्
सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्त्तिनी ७
दुःखा ह्यन्या सदा खिन्ना चित्तभेदः परस्परम्
प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः ८
योषित्सर्वा जलौकेव भूषणाच्छादनाशनैः
सुभृत्यापि कृता नित्यं पुरुषं ह्यपकर्षति ९
जलौका रक्तमादत्ते केवलं सा तपस्विनी
इतरा तु धनं वित्तं मांसं वीर्यं बलं सुखम् १०
सशङ्का वालभावे तु यौवने विमुखी भवेत्
तृणवन्मन्यते पश्चाद्वृद्धभावे स्वकं पतिम् ११
अनुकूला नवाग्दुष्टा दक्षा साध्वी पतिव्रता
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः १२
या हृष्टमनसा नित्यं स्थानमानविचक्षणा
भर्त्तुः प्रीतिकरी नित्यं सा भार्य्या हीतरा जरा १३
शिष्यो भार्य्या शिशुर्भ्राता पुत्रो दासः समाश्रितः
यस्यैतानि विनीतानि तस्य लोके हि गौरवम् १४
प्रथमा धर्मपत्नी च द्वितीया रतिवर्द्धिनी
दृष्टमेव फलं तत्र नादृष्टमुपजायते १५
धर्मपत्नी समाख्याता निर्द्दोषा यदि सा भवेत्
दोषे सति न दोषः स्यादन्या भार्य्या गुणान्विता १६
अदृष्टापतितां भार्य्यां यौवने यः परित्यजेत्
स जीवनान्ते स्त्रीत्वञ्च बन्ध्यत्वञ्च समाप्नुयात् १७
दरिद्रं व्याधितं चैव भर्त्तारं यावमन्यते
शुनी गृध्री च मकरी जायते सा पुनः पुनः १८
मृते भर्तरि या नारी समारोहेद्धुताशनम्
सा भवेत्तु शुभाचारा स्वर्गलोके महीयते १९



online Sanskrit books

व्यालग्राही यथा व्यालं बलादुद्धरते विलात्
तथा सा पतिमुद्धृत्य तेनैव सह मोदते २०
चाण्डालप्रत्यवसितपरिव्राजकतापसाः
तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् २१
इति दाक्षे धर्मशास्त्रे चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

उक्तं शौचमशौचञ्च कार्य्यं त्याज्यं मनीषिभिः
विशेषार्थं तयोः किञ्चिद्वक्ष्यामि हितकाम्यया १
शौचे यत्नः सदाकार्य्यः शौचमूलोद्विजः स्मृतः
शौचाचारविहीनस्य समस्तनिष्फलाः क्रियाः २
शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरन्तथा
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ३
अशौचाद्धि वरं बाह्यं तस्मादाभ्यन्तरं वरम्
उभाभ्याञ्च शुचिर्यस्तु स शुचिर्नेतरः शुचिः ४
एका लिङ्गे गुदे तिस्रो दश वामकरे तथा
उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ५
गृहस्थशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम्
द्विगुणं त्रिगुणञ्चैव चतुर्थस्य चतुर्गुणम् ६
अर्द्धप्रसृतिमात्रन्तु प्रथमा मृत्तिका स्मृता
द्वितीया च तृतीया च तदर्द्धं परिकीर्तिता ७
लिङ्गेऽप्यत्र समाख्याता त्रिपर्वी पूर्य्यते यया
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ८
त्रिगुणन्तु वनस्थानां यतीनाञ्च चतुर्गुणम्
दातव्यमुदकन्तावन्मृदभावो यथा भवेत् ९
मृदा जलेन शुद्धिः स्यान्न क्लेशो न धनव्ययः

यस्य शौचेऽपि शैथिल्यं चित्तं तस्य परीक्षितम्  १०
अन्यदेव दिवा शौचं रात्रावन्यद्विधीयते
अन्यदापत्सु विप्राणामन्यदेव ह्यनापदि  ११
दिवोदितस्य शौचस्य रात्रावर्द्धं विधीयते
तदर्द्धमातुरस्याहुस्त्वरायामर्द्धमध्वनि  १२
न्यूनाधिकं न कर्तव्यं शौचे शुद्धिमभीप्सिता
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते  १३
इति दाक्षे धर्मशास्त्रे पञ्चमोऽध्यायः

अथ षष्ठोऽध्यायः

सूतकं तु प्रवक्ष्यामि जन्ममृत्युसमुद्भवम्
यावज्जीवं तृतीयन्तु यथावदनुपूर्वशः  १
सद्यः शौचं तथैकाहो द्वित्रिचतुरहस्तथा
दशाहो द्वादशाहश्च पक्षो मासस्तथैव च  २
मरणान्तं तथा चान्यद्दशपक्षन्तु सूतके
उपन्यस्तक्रमेणैव वक्ष्याम्यहमशेषतः  ३
ग्रन्थार्थं यो विजानाति वेदमङ्गैः समन्वितम्
सकल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकी  ४
राजर्त्विग्दीक्षितानाञ्च बाले देशान्तरे तथा
व्रतिनां सत्रिणाञ्चैव सद्यः शौचं विधीयते  ५
एकाहस्तु समाख्यातो योऽग्निवेदसमन्वितः
हीने हीनतरे चैव द्वित्रिचतुरहस्तथा  ६
जातिविप्रो दशाहेन द्वादशाहेन भूमिपः
वैश्य पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति  ७
अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्वा च यः पुनः
एवं विधस्य सर्वस्य सूतकं समुदाहृतम्

व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्वदा
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ८
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ९
न सूतकं कदाचित्स्याद्यावज्जीवन्तु सूतकम्
एवं गुणविशेषेण सूतकं समुदाहृतम् १०
सूतके मृतके चैव तथा च मृतसूतके
एतत्संहतशौचानां मृतशौचेन शुद्ध्यति ११
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते
दशाहात्तु परं शौचं विप्रोऽर्हति च धर्मवित् १२
दानञ्च विधिना देयं अशुभात्तारकं हि तत्
मृतकान्ते मृतो यस्तु सूतकान्ते च सूतकम् १३
एतत्संहतशौचानां पूर्वाशौचेन शुद्ध्यति
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते १४
चतुर्थेऽहनि कर्तव्यमस्थि सञ्चयनं द्विजैः
ततः सञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते १५
वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः
दशषट्त्र्यहमेकाहः प्रसवे सूतकं भवेत् १६
यज्ञकाले विवाहे च देशभङ्गे तथैव च
हूयमाने तथाग्नौ च नाशौचं मृतसूतके १७
स्वस्थकाले त्विदं सर्वमशौचं परिकीर्तितम्
आपद्गतस्य सर्वस्य सूतके न तु सूतकम् १८
इति दाक्षे धर्मशास्त्रे षष्ठोऽध्यायः

अथ सप्तमोऽध्यायः

लोको वशीकृतो येन येन चात्मा वशीकृतः



online Sanskrit books

इन्द्रियार्थो जितो येन तं योगं प्रब्रवीम्यहम्  १
प्राणायामस्तथा ध्यानं प्रत्याहारस्तु धारणा
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते  २
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात्
व्रतैर्यज्ञैस्तपोभिश्च न योगः कस्यचिद्भवेत्  ३
न च पथ्याशनाद्योगो न नासाग्रनिरीक्षणात्
न च शास्त्रातिरिक्तेन शौचेन स भवेत्क्वचित्  ४
न मौनमन्त्रकुहकैरनेकैः सुकृतैस्तथा
लोकयात्रावियुक्तस्य योगो भवति कस्यचित्  ५
अभियोगात्तथाभ्यासात्तस्मिन्नेव तु निश्चयात्
पुनः पुनश्च निर्वेदाद्योगः सिद्ध्यति नान्यथा  ६
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च
सर्व्वभूतसमत्वेन योगः सिध्यति नान्यथा  ७
यश्चात्मनिरतो नित्यमात्मक्रीडस्तथैव च
आत्मनिष्ठश्च सततमात्मन्येव स्वभावतः  ८
रतश्चैव स्वयं तुष्टः सन्तुष्टो नान्यमानसः
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिद्ध्यति  ९
सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः
ईदृक्चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम्  १०
य आत्मव्यतिरेकेण द्वितीयं नैव पश्यति
ब्रह्मीभूय स एवं हि दक्षपक्ष उदाहृतः  ११
विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति
यत्नेन विषयासक्तिं तस्माद्योगी विवर्जयेत्  १२
विषयेन्द्रियसंयोगः केचिद्योगं वदन्ति हि
अधर्मो धर्मरूपेण गृहीतस्तैरपण्डितैः  १३
मनसश्चात्मनश्चैव संयोगञ्च तथापरे

उक्तानामधिका ह्येते केवलं योगवञ्चिताः १४
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते १५
कषायमोहविक्षेपलज्जाशङ्कादिचेतसः
व्यापारास्तु समाख्यातास्तान् जित्वा वशमानयेत् १६
कुटुम्बैः पञ्चभिर्ग्राम्यैः षष्ठस्तत्र महत्तरः
देवासुरमनुष्यैस्तु स जेतुं नैव शक्यते १७
वलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते
जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः १८
बहिर्मुखानि सर्व्वाणि कृत्वा चाभिमुखानि वै
सर्वञ्चैवेन्द्रियग्रामं मनश्चात्मनि योजयेत् १९
सर्वभावविनिर्मुक्तः क्षेत्रज्ञं ब्रह्मणि न्यसेत्
एतद्ध्यानञ्च योगश्च शेषाः स्युर्ग्रन्थविस्तराः २०
त्यक्त्वा विषयभोगांश्च मनो निश्चलतां गतम्
आत्मशक्तिस्वरूपेण समाधिः परिकीर्त्तितः २१
चतुर्णां सन्निकर्षेण पदं यत्तदशाश्वतम्
द्वयोस्तु सन्निकर्षेण शाश्वतं ध्रुवमक्षयम् २२
यन्नास्ति सर्व्वलोकस्य तदस्तीति विरुद्ध्यते
कथ्यमानं तथान्यस्य हृदये नावतिष्ठते २३
स्वसंवेद्यं हि तद्ब्रह्म कुमारीमैथुनं यथा
अयोगी नैव जानाति जातोन्धो हि यथा घटम् २४
नित्याभ्यसनशीलस्य सुसंवेद्यं हि तद्भवेत्
तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् २५
बुधस्त्वाभरणं भावं मनसालोचनं यथा
मन्यते स्त्री च मूर्खश्च तदेव बहुमन्यते २६
सत्त्वोत्कटाः सुराश्चापि विषयेण वशीकृताः

प्रमादिभिः क्षुद्रसत्वैर्मानुषैरत्र का कथा २७
तस्मात्त्यक्तकषायेण कर्त्तव्यं दण्डधारणम्
इतरस्तु न शक्नोति विषयैरभिभूयते २८
न स्थिरं क्षणमप्येकमुदकं हि यथोर्मिभिः
वाताहतं तथा चित्तं तस्मात्तस्य न विश्वसेत् २९
त्रिदण्डव्यपदेशेन जीवन्ति बहवो नराः
यो हि ब्रह्म न जानाति न त्रिदण्डार्ह एव सः ३०
ब्रह्मचर्य्यं सदा रक्षेदष्टधा मैथुनं पृथक्
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ३१
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ३२
न ध्यातव्यं न वक्तव्यं कर्त्तव्यं कदाचन
एतैः सर्वैः सुसम्पन्नो यतिर्भवति नेतरः ३३
पारिव्रज्यं गृहीत्वा च यो धर्मे नावतिष्ठते
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ३४
एको भिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम्
त्रयो ग्रामस्तथा ख्यात ऊर्द्ध्वन्तु नगरायते ३५
नगरं हि न कर्त्तव्यं ग्रामो वा मिथुनं तथा
एतत्त्रयं प्रकुर्व्वाणः स्वधर्माच्चयवते यतिः ३६
राजवार्त्तादि तेषान्तु भिक्षावार्त्ता परस्परम्
स्नेहपैशून्यमात्सर्य्यं सन्निकर्षादसंशयम् ३७
लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः
एते चान्ये च बहवः प्रपञ्चाः कुतपस्विनाम् ३८
ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता
भिक्षोश्चत्वारि कर्माणि पञ्चमो नोपपद्यते ३९
तपोजपैः कृशीभूतो व्याधितोऽवसथावहः



online Sanskrit books

वृद्धो ग्रहगृहीतश्च यश्चान्यो विकलेन्द्रियः ४०
नीरुजश्च युवा चैव भिक्षुर्नावसथावहः
स दूषयति तत्स्थानं बुधान् पीडयतीति च ४१
नीरुजश्च युवा चैव ब्रह्मचर्य्याद्विनश्यति
ब्रह्मचर्य्याद्विनष्टस्तु कुलञ्चैव तु नाशयेत् ४२
वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते
तस्यावसथनाथस्य मूलान्यपि निकृन्तति ४३
आश्रमे तु यतिर्यस्य मुहूर्त्तमपि विश्रमेत्
किन्तस्यान्येन धर्मेण कृतकृत्योऽभिजायते ४४
समितं यद्गृहस्थेन पापमामरणान्तिकम्
स निर्दहति तत्सर्व्वमेकरात्रोषितो यतिः ४५
योगाश्रमपरिश्रान्तं यस्तु भोजयते यतिम्
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम् ४६
यस्मिन् देशे वसेद्योगी ध्यानयोगविचक्षणः
सोऽपि देशो भवेत्पूतः किंपुनस्तस्य वान्धवाः ४७
द्वैतञ्चैव तथाद्वैतं द्वैताद्वैतं तथैव च
न द्वैतं नापि चाद्वैतमित्येतत्परमार्थिकम् ४८
नाहं नैवान्यसम्बन्धो ब्रह्मभावेन भावितः
ईदृशायामवस्थायामवाप्यं परमं पदम् ४९
द्वैतपक्षाः समाख्याता येऽद्वैते तु व्यवस्थिताः
अद्वैतिनां प्रवक्ष्यामि यथा धर्मः सुनिश्चितः ५०
तत्रात्मव्यतिरेकेण द्वितीयं यदि पश्यति
ततः शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थसञ्चयाः ५१
दक्षशास्त्रं यथा प्रोक्तमशेषाश्रममुत्तमम्
अधीयन्ते तु ये विप्रास्ते यान्त्यमरलोकताम् ५२
इदन्तु यः पठेद्भक्त्या शृणुयादधमोऽपिवा

स पुत्रपौत्रपशुमान् कीर्त्तिञ्च समवाप्नुयात् ५३
श्रावयित्वा त्विदं शास्त्रं श्राद्धकालेऽपि वा द्विजः
अक्षयं भवति श्राद्धं पितृभ्यश्चोपजायते ५४

इति दाक्षे धर्मशास्त्रे सप्तमोऽध्यायः

समाप्ता चेयं दक्षस्मृतिः

Reference:

*Smṛti Sandarbha*, Vol. I, (Delhi: Nag, 1981) p. 569.



online Sanskrit books

# विष्णुस्मृतिः

श्रीगणेशाय नमः

महामते महाप्राज्ञ सर्वशास्त्रविशारद ।
अक्षीणकर्म बन्धस्तु पुरुषो द्विजसत्तम १
सततं किं जपन् जप्यं विबुधः किमनुस्मरन्
मरणे यज्जपं जप्यं यच्च भावमनुस्मरन् २
यच्च ध्यात्वा द्विजश्रेष्ठ पुरुषो मुत्युमागतः
परम्पदमवाप्नोति तन्मे वद महामुनेः ३
शौनक उवाच
इदमेव महाराज पृष्टवांस्ते पितामहः
भीष्मं धर्मभृतां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ४
युधिष्ठिर उवाच
पितामह महाप्राज्ञ सर्वशास्त्र विशारद
प्रयाणकाले यच्चिन्त्यं सूरिभिस्तत्वचिन्तकैः ५
किन्नु स्मरन् कुरुश्रेष्ठ मरणे पर्युपस्थिते
प्राप्नुयात्परमां सिद्धिं श्रोतुमिच्छामि तद्वद ६
भीष्म उवाच
अद्भुतं च हितं सूक्ष्मं उक्तं प्रश्नं त्वयानघ
शृणुष्वावहितो राजन् नारदेन पुरा श्रुतम् ७
श्रीवत्साङ्कं जगद्बीजमनन्तं लोकसाक्षिणम्
पुरा नारायणं देवं नारदः परिपृष्टवान् ८
नारद उवाच
त्वमक्षरं परं ब्रह्म निर्गुणं तमसः परम्
आहुर्वेद्यं परं धाम ब्रह्मादि कमलोद्भवम् ९
भगवन् भूतभव्येश श्रद्दधानै जितेन्द्रियैः
कथं भक्तैर्विचिन्त्योऽसि योगिभिर्देहमोक्षिभिः १०



online Sanskrit books

किं च जप्यं जपेन्नित्यं कल्यमुत्थाय मानवाः
कथं युञ्जन् सदा ध्यायन् ब्रूहि तत्त्वं सनातनम्  ११
भीष्म उवाच
श्रुत्वा तस्य तु देवर्षेर्वाक्यं वाचस्पतिः स्वयम्
प्रोवाच भगवान् विष्णुर्नारदं वरदः प्रभुः
श्रीभगवानुवाच
हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम्
मरणे मामनुस्मृत्य प्राप्नोति परमां गतिम्  १३
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते
ओङ्कारमग्रतः कृत्वा मां नमस्कृत्य नारद  १४
एकाग्रः प्रयतो भूत्वा इमं मन्त्रमुदीरयेत्
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः  १५
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव
ओमित्येव परं ब्रह्म शाश्वतं परमव्ययम्  १६
एतदुच्चारयन्मर्त्यो ब्रह्मभूयाय कल्पते
ब्रह्मा विष्णुश्च रुद्रश्च सर्वमोमिति चोच्यते  १७
सम्पन्नेऽसुरसंथाने नम्यते च मुमुक्षुभिः
मोक्षश्च ज्ञानिनां प्रोक्तो मोहश्चाज्ञानिनां स्मृतः  १८
यस्य यादृग्विधो भावस्तस्य तादृग्विधो हरिः
भवे भवनविश्वात्मा भूतानां हितकाम्यया  १९
सृजते आत्मनात्मानमात्मन्येव स्वमायया
हरिरेव सतां नित्यं शरण्यः शरणार्थिनाम्  २०
न हि नारायणादन्यस्त्रिषु लोकेषु विद्यते
वसत्यमृतमक्षय्यं यस्मिन् लोकाः ससागराः  २१
त एव सृजते लोकान् सृष्टिकाले जगत्प्रभुः
तेजांसि येन दिव्यन्ते महोत्पन्नेन तेजसा  २२

वासुदेवात्मकं सर्वं तत्तेजोऽपि हि नान्यथा
वासनाद्यास्तु ये भावाः सम्भवन्ति युगे युगे २३
लोकत्रयहितार्थाय स्वोकाराय नो हरिः
यतश्चोत्पद्यते विश्वं यस्मिन्नेव प्रलिप्यते २४
क्षराक्षरविसृष्टस्तु सोऽच्युतः पुरुषोत्तमः
अव्यक्तं शाश्वतं देवं प्रभवं पुरुषोत्तमम् २५
प्रपद्ये प्राञ्जलिर्विष्णुमक्षय्यं भक्तवत्सलम्
पुराणं पुरुषं दिव्यमद्भूतं लोकपावनम् २६
प्रपद्ये पुण्डरीकाक्षं देवं नारायणं हरिम्
लोकनाथं सहस्राक्षमक्षरं परमं पदम् २७
भगवन्तं प्रपन्नोऽस्मि भूतभव्यप्रभुं विभुम्
स्रष्टारं सर्वलोकानामनन्तं विश्वतोमुखं २८
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम्
हिरण्यगर्भममृतं भूगर्भं परतः परम् २९
प्रभुं विभुमनाद्यन्तं प्रपद्ये तं रविप्रभम्
सहस्रशीर्षं पुरुषं महर्षिं सत्यभावनम् ३०
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम्
नारायणं पुराणेशं योगात्मानं सनातनम् ३१
संज्ञानां सर्वसत्वानां प्रपद्ये ध्रुवमीश्वरम्
यः प्रभुः सर्वलोकानां येन सर्वमिदं ततम् ३२
चराचरगुरुर्देवः स मे विष्णुः प्रसीदतु
यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः ३३
ब्रह्मयोनिर्हि विश्वस्य स मे विष्णुः प्रसीदतु
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेवच ३४
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु
पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ३५

गुणाकरः स मे विष्णुर्वासुदेवः प्रसीदतु
अग्निसोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनाम् ३६
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु
कार्यं क्रिया च करणं कर्त्ता हेतुः प्रयोजनम् ३७
अक्रिया करणी कार्यं स मे विष्णुः प्रसीदतु
शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ३८
रिपुगर्भस्य यो गर्भः स मे विष्णुः प्रसीदतु
अबलो येन बालेन कंसमल्लो महाबलः ३९
चाणूरो निहतो रङ्गे स मे विष्णुः प्रसीदतु
शङ्खः करवरे यस्य स मे विष्णुः प्रसीदतु ४०
येन क्रान्तास्त्रयो लोका दानवाश्च वशीकृताः
शरणं सर्वभूतानां स मे विष्णुः प्रसीदतु ४१
योगावास नमस्तुभ्यं सर्वावास वरप्रद
सर्वादि वासनाद्यादि वासुदेव प्रधानकृत् ४२
यज्ञगर्भ हिरण्याङ्ग पञ्चयज्ञ नमोऽस्तुते
चतुर्मूर्त्तिः परन्धाम लक्ष्मानन्दवरार्चित ४३
अजस्त्वमगमः पन्था ह्यमूर्त्तिविश्वमूर्त्तिधृक्
श्रीकर्तः पञ्चकालज्ञ नमस्ते ज्ञानसागर ४४
अव्यक्ताद्व्यक्तमुत्पन्नमव्यक्ताद्यः परोऽक्षरः
यस्मात्परतरन्नास्ति तमस्मि शरणं गतः ४५
न प्रधानो न च महान् पुरुषश्चेतनो ह्यजः
अनयोग्यः परतरस्तमस्मि शरणं गतः ४६
चिन्तयन्तोऽपि यन्नित्यं ब्रह्मेशानादयः प्रभुम्
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ४७
जितेन्द्रिया जितात्मानो ज्ञानध्यानपरायणाः
यं प्राप्य न निवर्त्तन्ते तमस्मि शरणं गतः ४८

एकांशेन जगत्कृत्स्नमवष्टभ्य विभुः स्थितः
अग्राह्यो निर्गुणो नित्यस्तमस्मि शरणं गतः ४९
सोमार्काग्निगतन्तेजो या च तारामयी द्युतिः
दिवि संजायते यो यः स महात्मा प्रसीदतु ५०
सूर्यमध्यस्थितः सोमस्तस्य मध्ये च यास्तिता
भूतबाह्याचरा दीप्तिः स महात्मा प्रसीदतु ५१
सगुणे निर्गुणश्चासौ लक्ष्मीवान् चेतनो ह्यजः
सूक्ष्मः सर्वगतो देही स महात्मा प्रसीदतु ५२
साङ्ख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः
यं विदित्वा विमुच्यन्ते स महात्मा प्रसीदतु ५३
अव्यक्तः समधिष्ठाता ह्यचिन्त्यः सदसत्परः
आस्थितः प्रकृतिं भुङ्क्ते स महात्मा प्रसीदतु ५४
क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः
निर्विकार नमस्तेऽस्तु साक्षिक्षेत्रिध्रुवस्थितः ५५
अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे
ये च त्वां नाभिजानन्ति संसारे सञ्चरन्ति ते ५६
कामक्रोधविनिर्मुक्ता भक्तास्त्वां प्रविशन्ति च
अव्यक्तमत्यहङ्कारा मनोभूतेन्द्रियाणि च ५७
त्वयि तानि चलेषु त्वं नतेषु त्वं न ते त्वयि
एकत्वान् चत्वनानात्वं ये विदुर्यान्ति ते परम् ५८
समोहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः
समत्वमभिकाङ्क्षन्तम्भक्त्या वै नान्यचेतसः ५९
चराचरमिदं सर्वं भूतग्रामञ्चतुर्विधम्
त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणाइव ६०
स्रष्टो भोक्तासि कूटस्थो ह्यतत्वस्तत्वसंज्ञितः
अकर्ता हेतुरचरः पृथगात्मन्यवस्थितः ६१

न मे भूतेषु संयोगो न भूतत्वगुणाधिकः
अहङ्कारेण बुद्ध्या वा न मे योगास्त्रिभिर्गुणैः ६२
न मे धर्मो ह्यधर्मो वा नामभोजन्नवा पुनः
जरामरणमोक्षार्थं त्वां प्रपन्नोस्मि सर्वगः ६३
विषयैरिन्द्रियैर्वापि न मे भूयः समागतः
ईश्वरोऽसि जगन्नाथ किमतः परमुच्यते ६४
भक्तानां यद्धितं देव तद्देहि त्रिदशेश्वर
पृथिवीं यातु मे घ्राणं यातु मे रसनञ्जलम् ६५
रूपं हुताशनं यातु स्पर्शो यातु च मारुतम्
श्रोत्रमाकाशमप्ये तु मनो वैकारिकं पुनः ६६
इन्द्रियाणि गुणान्यातु स्वासु स्वासु च योनिषु
पृथिवी यातु सलिलमापोऽग्निमनलोऽनिलम् ६७
वायुराकाशमप्येतु मनश्चाकाशमेव च
अहङ्कारं मनो यातु मोहनं सर्वदेहिनाम् ६८
अहङ्कारस्तथा बुद्धिं बुद्धिरव्यक्तमेव च
प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ६९
वियोगः सर्वकरणैर्गुणैर्भूतैश्च मेऽभवत्
सत्वं रजस्तमश्चैव प्रकृतिं प्रविशन्तु मे ७०
निष्कैवल्यं पदं देवकांक्षितं परमन्तपः
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्पुनः ७१
नमो भगवते तस्मै विष्णवे प्रभविष्णवे
त्वद्बुद्धिस्तद्गतप्राणस्त्वद्भक्तस्त्वत्परायणः ७२
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते
पूर्वदेहिकृता ये मे व्याधयः प्रविशन्तु माम् ७३
आर्दयन्तु च दुःखानि ऋणं मे न भवेदिति
उपदिष्टन्तु मे सर्वे व्याधयः पूर्वचिन्तिताः ७४

अनृणो गन्तुमिच्छामि तद्विष्णोः परमम्पदम्
अहं भगवतस्तस्य मम वासः सनातनः ७५
तत्याहं न प्रणश्यामि स च मे न प्रणश्यति
कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च ७६
दशेन्द्रियाणि मनसो ह्यहङ्कारेण वा पुनः
अहङ्कारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ७७
आत्मबुद्धीन्द्रियम्पश्येद्बुद्धौ बुद्धेः परायणम्
ममायमपि तस्याहं येन सर्वमिदन्ततम् ७८
आत्मनात्मनि संयोज्यममात्मन्यनुसंस्मरेत्
एवं बुद्धेः परंबुद्ध्वा लभते न पुनर्भवम् ७९
ॐ नमो भगवते तस्मै देहिनां परमात्मने
नारायणाय भक्तानामेकनिष्ठाय शाश्वते ८०
हृदिस्थाय च भूतानां सर्वेषां च महात्मने
इमामनुस्मृतिन्दिव्यां वैष्णवीं पापनाशनीम् ८१
स्वयम्विबुद्धश्च पठेद्यत्र तत्र समभ्यसेत्
मरणे समनुप्राप्ते यस्त्विमामनुसंस्मरेत् ८२
अपि पापममाचारः स याति परमाङ्गतिम्
यद्यहङ्कारमाश्रित्य यज्ञदानतपः क्रियाः ८३
कुर्वस्तत्फलमाप्नोति पुनरावर्तते न तु
अभ्यर्चयन् पितृन्देवान् पठन् जुह्वन् बलिन्ददन् ८४
ज्वलदग्निं स्मरेद्यो मां लभते परमाङ्गतिम्
यज्ञोदानं तपः कर्म पावनानि मनीषिणाम् ८५
यज्ञोदानं तपस्तस्मात्कुर्यादाशाविवर्जितः
पौर्णमास्याममावास्यां द्वादश्यां च विशेषतः ८६
श्रावयेच्छ्रद्दधानांश्च मद्भक्तांश्च विशेषतः
नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ८७

तस्यात्त्वयो भवेल्लोकः श्वपाकस्यापि नारद
किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ८८
श्रद्धावन्तो यतात्मानस्ते मां यान्ति मदाश्रिताः
कर्माण्याद्यन्तवन्तीह मद्भक्तोऽनन्तमश्नुते ८९
मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः
अवाप्स्यसि तपः सिद्धिं लभ्यसे च पदं मम ९०
अज्ञानामिच्छया ज्ञानं दद्याद्धर्मोपदेशनम्
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ९१
अस्मात्प्रदेयं साधुभ्यो जन्मबन्धभयापहम्
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ९२
नासौ फलमवाप्नोति मद्भक्तैर्यदवाप्यते
भीष्म उवाच
एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा
यदुवाच तथा शम्भुस्तदुक्तं तव सुव्रत ९३
त्वमप्येकमना भूत्वा ध्येयं ज्ञेयं गुणाधिकम्
भज सर्वेण भावेन परमात्मानमव्ययम् ९४
श्रुत्वैतद् नारदो वाक्यं दिव्यं नारायणेरितम्
अत्यन्तभक्तिमान्देवे एकान्तित्वमुपेयिवान् ९५
नारायणमृषीन्देवं दशवर्षाण्यनन्यभाक्
इदं जपन्वै प्राप्नोति तद्विष्णोः परमं पदम् ९६
किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्व्रतैः
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ९७
नारायणाय नम ओमिति वेदमन्त्रं-
यो नित्यमेव मनसापि समभ्यसेच्च
पापैः प्रमुच्य परमे तृषयातिविष्णोः-
स्थानं हि सर्वमिति वेदविदो वदन्ति ९८

किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः
यो नित्यं ध्यायते देव नारायण मनन्यधीः  ९९
चीरवासा जपी वापि त्रिदण्डी मुण्ड एव वा
भूषितो वा द्विजश्रेष्ठ न लिङ्गं धर्मकारणम्  १००
ये नृशंसा दुरात्मानः पापधर्मविवर्जिताः
तेऽपि यान्ति परं स्थानं नारायणपरायणाः  १०१
अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम्
कुतर्कज्ञानदृष्टीनां विश्रान्तेन्द्रियवर्त्मनाम्  १०२
नमो नारायणायेति ये विदुर्ब्रह्म शाश्वतम्
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम्  १०३
आचारहीनो च मुनिप्रवीर भक्त्या विहीनोऽपि तु विन्दतोऽपि
संकीर्त्य नारायणशब्दमात्रं विमुक्तपापो विशतेऽच्युतां गतिम्  १०४
कान्तारवनदुर्गेषु कृत्स्नेष्वापत्सु संयुगे
दस्युभिः सन्निरोधे च नामभिर्मां प्रकीर्तयेत्  १०५
न दिव्यपुरुषो धीमान् येषु स्थानेषु मां स्मरेत्
चौरव्याघ्र महासर्पैः क्रूरैरपि न वाध्यते  १०६
जन्मान्तरसहस्त्रेषु तपोध्यानसमाधिभिः
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते  १०७
नामास्ति याति शक्तिश्च पापे निर्हरणे हरेः
श्वपचोऽपि नरः कर्तुं क्षमस्तावन्न किल्बिषम्  १०८
न तावत्पापमस्तीह यावन्नामहतं हरेः
अतिरेक भयादाहुः प्रायश्चित्तान्तरं बुधाः  १०९
गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः  ११०
न वासुदेवात्परमस्ति मङ्गलं न वासुदेवात्परमस्ति पावनम्
न वासुदेवात्परमस्ति दैवतं न वासुदेवं प्रणिपत्य सीदति  १११



online Sanskrit books

इमां रहस्यां परमामनुस्मृतिं ह्यधीत्य बुद्धिं लभते च नैष्ठिकम्
विहाय दुःखानि विमुच्य सङ्कटात्
स वीतरागो विचरेन्महीमिमाम्  ११२
गङ्गायां मरणं चैव दृढा भक्तिश्च केशवे
ब्रह्मविद्याप्रबोधश्च नाल्पस्य तपसः फलम्  ११३

इति विष्णुस्मृतिः समाप्ता

Reference:
*Smṛti Sandarbha*, Vol. I, (Delhi: Nag, 1981) p. 389.



online Sanskrit books

# अथ याज्ञवल्क्यस्मृतिः

## प्रथम आचाराध्यायः

### १ उपोद्घातप्रकरणम्

योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन्
वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः १
मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन्
यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत २
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ३
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः
यमापस्तम्बसम्वर्ताः कात्यायनबृहस्पती ४
पराशरव्यासशङ्खलिखिता दक्षगौतमौ
शातातपो वसिष्ठश्च धर्मशास्त्रयोजकाः ५
देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ६
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियं आत्मनः
सम्यक्सम्कल्पजः कामो धर्ममूलं इदं स्मृतम् ७
इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्
अयं तु परमो धर्मो यद्योगेन आत्मदर्शनम् ८
चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा
सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः ९

### २ ब्रह्मचारिप्रकरणम्

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः १०
गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा

षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च  ११
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम्  १२
एवमेनः शमं याति बीजगर्भसमुद्भवम्
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः  १३
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्
राज्ञामेकादशे सृक्ते विशामेके यथाकुलम्  १४
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्  १५
दिवासम्ध्यासु कर्णस्थब्रह्मसूत्रोदङ्मुखः
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः  १६
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः  १७
अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्  १८
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्  १९
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः  २०
हृत्कण्ठतालुगाभिस्तु यथासम्ख्यं द्विजातयः
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः  २१
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसम्यमः
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः  २२
गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम्
प्रतिप्रणवसम्युक्तां त्रिरयं प्राणसम्यमः  २३
प्राणानायम्य सम्प्रोक्ष्य तृचेन अब्दैवतेन तु

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्  २४
सम्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्
अग्निकार्यं ततः कुर्यात्सम्ध्ययोरुभयोरपि  २५
ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्
गुरुं चैव अप्युपासीत स्वाध्यायार्थं समाहितः  २६
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्
हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः  २७
कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः
अध्याप्या धर्मतः साधु शक्ताप्तज्ञानवित्तदाः  २८
दण्डाजिनोपवीतानि मेखलां चैव धारयेत्
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये  २९
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम्  ३०
कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया
आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ३१
ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ३२
मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्
भास्करालोकनाश्लीलपरिवादादि वर्जयेत्  ३३
स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति
उपनीय ददद्वेदमाचार्यः स उदाहृतः  ३४
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते
एते मान्या यथापूर्वमेभ्यो माता गरीयसी  ३५
प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे  ३६
आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्

ब्रह्मक्षत्रविशां काल औपनायनिकः परः ३७
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ३८
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ३९
यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्
वेद एव द्विजातीनां निःश्रेयसकरः परः ४०
मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः
पितॄन्मधुघृताभ्यां च ऋचोऽधीते च योऽन्वहम् ४१
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ४२
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत्
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ४३
मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन्
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ४४
वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः
इतिहासांस्तथा विद्याः शक्त्याधीते हि योऽन्वहम् ४५
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम्
करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ४६
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः
यं यं क्रतुमधीते च तस्य तस्याप्नुयात्फलम् ४७
त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते
तपसश्च परस्येह नित्यं स्वाध्यायवान्द्विजः ४८
नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ४९
अनेन विधिना देहं सादयन्विजितेन्द्रियः

ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ५०

## ३ विवाहप्रकरणम्

गुरवे तु वरं दत्त्वा स्नायाद्वा तदनुज्ञया
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ५१
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ५२
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजान्
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ५३
दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात्
स्फीतादपि न सम्चारिरोगदोषसमन्वितात् ५४
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान्जनप्रियः ५५
यदुच्यते द्विजातीनां शूद्राद्दारोपसम्ग्रहः
नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ५६
तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्
ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ५७
ब्राह्मो विवाह आहूय दीयते शक्त्यलम्कृता
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ५८
यज्ञस्थ ऋत्विजे दैव आदायार्षस्तु गोद्वयम्
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ५९
इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने
स कायः पावयेत्तज्जः षट् षड्वंश्यान्सहात्मना ६०
आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः
राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ६१
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम्

वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ६२
पिता पितामहो भ्राता सकुल्यो जननी तथा
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ६३
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयम्वरम् ६४
सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक्
दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ६५
अनाख्याय ददद्दोषं दण्डय उत्तमसाहसम्
अदुष्टां तु त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम् ६६
अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ६७
अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ६८
आगर्भसम्भवाद्गच्छेत्पतितस्त्वन्यथा भवेत्
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ६९
हृताधिकारां मलिनां पिण्डमात्रोपजीविनाम्
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ७०
सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम्
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ७१
व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते
गर्भभर्तृवधादौ च तथा महति पातके ७२
सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियम्वदा
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ७३
अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत्
यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ७४
मृते जीवति वा पत्यौ या नान्यमुपगच्छति

सेह कीर्तिमवाप्नोति मोदते चोमया सह ७५
आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ७६
स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः
आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः ७७
लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ७८
षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु सम्विशेत्
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ७९
एवं गच्छन्स्त्रियं क्षामां मघां मूलं च वर्जयेत्
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ८०
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ८१
भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ८२
सम्यतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी
कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ८३
क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ८४
रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः ८५
पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः
हीना न स्याद्विना भर्त्रा गर्हणीयान्यथा भवेत् ८६
पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया
सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ८७
सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्

सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ८८
दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ८९

## ४ वर्णजातिविवेकप्रकरणम्

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः
अनिन्द्येषु विवाहेषु पुत्राः सम्तानवर्धनाः ९०
विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ९१
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ९२
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा
शूद्राज् जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ९३
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ९४
माहिष्येण करण्यां तु रथकारः प्रजायते
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ९५
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ९६

## ५ गृहस्थधर्मप्रकरणम्

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ९७
शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः
प्रातःसम्ध्यामुपासीत दन्तधावनपूर्वकम् ९८
हुत्वाग्नीन्सूर्यदैवत्यान्जपेन्मन्त्रान्समाहितः



online Sanskrit books

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ९९
उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये
स्नात्वा देवान्पितृंश्चैव तर्पयेदर्चयेत्तथा १००
वेदाथर्वपुराणानि सेतिहासानि शक्तितः
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् १०१
बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः
भूतपित्रमरब्रह्ममनुष्याणां महामखाः १०२
देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत्
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् १०३
अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम्
स्वाध्यायं सततं कुर्यान्न पचेदन्नमात्मने १०४
बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् १०५
आपोशनेनोपरिष्टादधस्तादश्नता तथा
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना १०६
अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः १०७
सत्कृत्य भिक्षवे भिक्षा दातव्या सव्रताय च
भोजयेच्चागतान्काले सखिसम्बन्धिबान्धवान् १०८
महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः १०९
प्रतिसम्वत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ११०
अध्वनीनो अतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः १११
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते



online Sanskrit books

वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ११२
अतिथिं श्रोत्रियं तृप्तमासीमन्तमनुव्रजेत्
अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ११३
उपास्य पश्चिमां सम्ध्यां हुत्वाग्नींस्तानुपास्य च
भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ सम्विशेत् ११४
ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम्
धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत् ११५
विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्
एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति ११६
वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम्
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः ११७
इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ११८
प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ११९
शूद्रस्य द्विजशुश्रूषा तयाजीवन्वणिग्भवेत्
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् १२०
भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् १२१
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् १२२
वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम्
आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा १२३
त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः
प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् १२४
प्रतिसम्वत्सरं सोमः पशुः प्रत्ययनं तथा

कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि १२५
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः
हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् १२६
चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात्
यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत् १२७
कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः १२८

६ स्नातकधर्मप्रकरणम्

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः
न विरुद्धप्रसङ्गेन सम्तोषी च भवेत्सदा १२९
राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा
दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत् १३०
शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः १३१
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्
नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी १३२
दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः
कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् १३३
न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु
न प्रत्यग्न्यर्कगोसोमसम्ध्याम्बुस्त्रीद्विजन्मनः १३४
नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम्
न च मूत्रं पुरीषं वा नाशुची राहुतारकाः १३५
अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयेत्
वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च १३६
ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्



online Sanskrit books

पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् १३७
जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत्
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न सम्विशेत् १३८
विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम्
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् १३९
नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित्
न राज्ञः प्रतिगृह्णीयाल् लुब्धस्योच्छास्त्रवर्तिनः १४०
प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् १४१
अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु १४२
पौषमासस्य रोहिण्यामष्टकायामथापि वा
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः १४३
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा १४४
सम्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने
समाप्य वेदं द्युनिशमारण्यकमधीत्य च १४५
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके
ऋतुसम्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च १४६
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः
कृतेऽनन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये १४७
श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिह्स्वने
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके १४८
देशेऽशुचावात्मनि च विद्युत्स्तनितसम्प्लवे
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते १४९
पांसुप्रवर्षे दिग्दाहे सम्ध्यानीहारभीतिषु



online Sanskrit books

धावतः पूतिगन्धे च शिष्टे च गृहमागते १५०
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः १५१
देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः
नाक्रामेद्रक्तविरामूत्रष्ठीवनोद्वर्तनादि च १५२
विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन
आमृत्योः श्रियमाकाङ्क्षेन्न कम्चिन्मर्मणि स्पृशेत् १५३
दूरादुच्छिष्टविरामूत्रपादाम्भांसि समुत्सृजेत्
श्रुतिस्मृत्युदितं सम्यङ् नित्यमाचारमाचरेत् १५४
गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत्
न निन्दाताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् १५५
कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु १५६
मातृपित्रतिथिभ्रातृजामिसम्बन्धिमातुलैः
वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः १५७
ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः
विवादं वर्जयित्वा तु सर्वाम्ल् लोकाञ् जयेद्गृही १५८
पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु
स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च १५९
परशय्यासनोद्यानगृहयानानि वर्जयेत्
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि १६०
कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम्
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् १६१
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम्
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् १६२
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम्

शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् १६३
नृशंसराजरजककृतघ्नवधजीविनाम्
चैलधावसुराजीवसहोपपतिवेश्मनाम् १६४
पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम्
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा १६५
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः
भोज्यान्नाः नापितश्चैव यश्चात्मानं निवेदयेत् १६६

७ भक्ष्याभक्ष्यप्रकरणम्

अनर्चितं वृथामांसं केशकीटसमन्वितम्
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् १६७
उदक्यास्पृष्टसम्घुष्टं पर्यायान्नं च वर्जयेत्
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः १६८
अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्
अस्नेहा अपि गोधूमयवगोरसविक्रियाः १६९
सम्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत्
औष्ट्रमैकशफं स्त्रैणं आरण्यकमथाविकम् १७०
देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनांस्तथा
अनुपाकृतमांसानि विड्जानि कवकानि च १७१
क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान्
सारसैकशफान्हंसान्सर्वांश्च ग्रामवासिनः १७२
कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान्
वृथाकृसरसम्यावपायसापूपशष्कुलीः १७३
कलविङ्कं सकाकोलं कुररं रज्जुदालकम्
जालपादान्खञ्जरीटानज्ञातांश्च मृगद्विजान् १७४
चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च

मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्  १७५
पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम्
लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत्  १७६
भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः
शशश्च मत्स्येष्वपि हि सिम्हतुण्डकरोहिताः  १७७
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः
अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने  १७८
प्राणात्यये तथा श्राद्धे प्रोक्षिते द्विजकाम्यया
देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक्  १७९
वसेत्स नरके घोरे दिनानि पशुरोमभिः
सम्मितानि दुराचारो यो हन्त्यविधिना पशून् १८०
सर्वान्कामानवाप्नोति हयमेधफलं तथा
गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात्  १८१

## ८  द्रव्यशुद्धिप्रकरणम्

सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम्
शाकरज्जुमूलफलवासोविदलचर्मणाम्  १८२
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते
चरुस्त्रुक्स्त्रुवसस्नेहपात्राण्युष्णेन वारिणा  १८३
स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम्
प्रोक्षणं सम्हतानां च बहूनां धान्यवाससाम्  १८५
तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवाम्
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि  १८५
सोषरोदकगोमूत्रैः शुध्यत्याविककौशिकम्
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा  १८६
सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम्

कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा १८७
भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा
सेकादुल्लेखनाल् लेपाद्गृहं मार्जनलेपनात् १८८
गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये १८९
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य च १९०
अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादिकर्षणात्
वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि १९१
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्
तथा मांसं श्वचण्डालक्रव्यादादिनिपातितम् १९२
रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः
विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नवने शुचिः १९३
अजाश्वयोर्मुखं मेध्यं न गोर्न नरजा मलाः
पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः १९४
मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः
श्मश्रु च आस्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः १९५
स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे
आचान्तः पुनराचामेद्वासो विपरिधाय च १९६
रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च १९७

## ९ दानप्रकरणम्

तपस्तप्त्वासृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये
तृप्त्यर्थं पितृदेवानां धर्मसम्रक्षणाय च १९८
सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः

तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः १९९
न विद्यया केवलया तपसा वापि पात्रता
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितं २००
गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम्
नापात्रे विदुषा किम्चिदात्मनः श्रेय इच्छता २०१
विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः
गृह्णन्प्रदातारमधो नयत्यात्मानमेव च २०२
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः
याचितेनापि दातव्यं श्रद्धापूतं स्वशक्तितः २०३
हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसम्युता
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा २०४
दातास्याः स्वर्गमाप्नोति वत्सरान्रोमसम्मितान्
कपिला चेत्तारयति भूयश्चासप्तमं कुलम् २०५
सवत्सारोमतुल्यानि युगान्युभयतोमुखीम्
दातास्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् २०६
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति २०७
यथाकथम्चिद्दत्त्वा गां धेनुं वाधेनुमेव वा
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते २०८
श्रान्तसम्वाहनं रोगिपरिचर्या सुरार्चनम्
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् २०९
भूदीपांश्च अन्नवस्त्राम्भस्तिलसर्पिः प्रतिश्रयान्
नैवेशिकं स्वर्णधुर्यं दत्त्वा स्वर्गे महीयते २१०
गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम्
यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत् २११
सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः

तद्दत्समवाप्नोति ब्रह्मलोकमविच्युतम् २१२
प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् २१३
कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च २१४
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः २१५
देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव वा
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च २१६

## १० श्राद्धप्रकरणम्

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसम्क्रमः २१७
व्यतीपातो गजछाया ग्रहणं चन्द्रसूर्ययोः
श्राद्धं प्रति रुचिश्चैते श्राद्धकालाः प्रकीर्तिताः २१८
अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा
वेदार्थविज् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः २१९
स्वस्त्रीयर्त्विज्जामातृयाज्यश्वशुरमातुलाः
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः २२०
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः २२१
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः २२२
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः २२३
मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः

परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः २२४
निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान्शुचिः
तैश्चापि सम्यतैर्भाव्यं मनोवाक्कायकर्मभिः २२५
अपराह्णे समभ्यर्च्य स्वागतेन आगतांस्तु तान्
पवित्रपाणिराचान्तानासनेषूपवेशयेत् २२६
युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च
परिस्तृते शुचौ देशे दक्षिणाप्रवणे तथा २२७
द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् २२८
पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि
आवाहयेदनुज्ञातो विश्वे देवास इत्यृचा २२९
यवैरन्ववकीर्याथ भाजने सपवित्रके
शं नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा २३०
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्
दत्त्वा उदकं गन्धमाल्यं धूपदानं सदीपकम् २३१
तथाच्छादनदानं च करशौचार्थमम्बु च
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् २३२
द्विगुणांस्तु कुशान्दत्त्वा ह्यु अन्तस्त्वेत्यृचा पितॄन्
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः २३३
अपहता इति तिलान्विकीर्य च समन्ततः
यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् २३४
दत्त्वा अर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः २३५
अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम्
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् २३६
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः

यथालाभोपपन्नेषु रौप्येषु च विशेषतः २३७
दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् २३८
सव्याहृतिकां गायत्रीं मधु वाता इति त्र्यृचम्
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः २३९
अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः
आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा २४०
अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् २४१
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः
उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवत् २४२
मातामहानामप्येवं दद्यादाचमनं ततः
स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च २४३
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् २४४
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम्
विश्वे देवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् २४५
दातारो नोऽभिवर्धन्तां वेदाः सम्ततिरेव च
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति २४६
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत्
वाजे वाज इति प्रीतः पितृपूर्वं विसर्जनम् २४७
यस्मिंस्तु संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः
पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् २४८
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्
ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह २४९
एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितृन्



online Sanskrit books

यजेत दधि कर्कन्धुमिश्रान्पिराडान्यवैः क्रियाः २५०
एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम्
ग्रावाहनाग्नौ करणरहितं ह्यपसव्यवत् २५१
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने
ग्रभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह २५२
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम्
ग्रर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् २५३
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्
एतत्सपिराडीकरणमेकोद्दिष्टं स्त्रिया ग्रपि २५४
ग्रर्वाक्सपिराडीकरणं यस्य सम्वत्सराद्भवेत्
तस्याप्यन्नं सोदकुम्भं दद्यात्सम्वत्सरं द्विजे २५५
मृतेऽहनि प्रकर्तव्यं प्रतिमासं तु वत्सरम्
प्रतिसम्वत्सरं चैवमाद्यमेकादशेऽहनि २५६
पिराडांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा
प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् २५७
हविष्यान्नेन वै मासं पायसेन तु वत्सरम्
मात्स्यहारिणकौरभशाकुनछागपार्षतैः २५८
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्
मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः २५९
खड्गामिषं महाशल्कं मधु मुन्यन्नमेव वा
लौहामिषं महाशाकं मांसं वार्ध्रीणसस्य च २६०
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते
तथा वर्षात्रयोदश्यां मघासु च विशेषतः २६१
कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि
द्यूतं कृषिं वाणिज्यां च द्विशफैकशफांस्तथा २६२
ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके

ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा २६३
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते २६४
स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा
पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् २६५
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि
अरोगित्वं यशो वीतशोकतां परमां गतिम् २६६
धनं वेदान्भिषक्सिद्धिं कुप्यं गा अप्यजाविकम्
अश्वानायुश्च विधिवद्यः श्राधं सम्प्रयच्छति २६७
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्
आस्तिकः श्रद्धधानश्च व्यपेतमदमत्सरः २६८
वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः
प्रीणयन्ति मनुयाणां पितॄन्श्राद्धेन तर्पिताः २६९
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः २७०

## ११ गणपतिकल्पप्रकरणम्

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः
गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा २७१
तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति २७२
काषायवाससश्चैव क्रव्यादांश्चाधिरोहति
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते २७३
व्रजन्नपि तथात्मानं मन्यते अनुगतं परैः
विमना विफलारम्भः संसीदत्यनिमित्ततः २७४
तेनोपसृष्टो लभते न राज्यं राजनन्दनः

कुमारी च न भर्तारमपत्यं गर्भमङ्गना २७५
आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा
वणिग्लाभं न चाप्नोति कृषिं चापि कृषीवलः २७६
स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम्
गौरसर्षपकल्केन साज्येन उत्सादितस्य च २७७
सर्वाउषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा
भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः २७८
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सम्गमाद्ध्रदात्
मृत्तिकां रोचनां गन्धान्गुग्गुलुं चाप्सु निक्षिपेत् २७९
या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात्
चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः २८०
सहस्राक्षं शतधारमृषिभिः पावनं कृतम्
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते २८१
भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः २८२
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा २८३
स्नातस्य सार्षपं तैलं स्रुवेण औदुम्बरेण तु
जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य च २८४
मितश्च सम्मितश्चैव तथा शालकटङ्कटौ
कूश्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः २८५
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः २८६
कृताकृतांस्तण्डुलांश्च पललौदनमेव च
मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेव तु २८७
पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि

मूलकं पूरिकापूपांस्तथैवोराडेरकस्रजः २८८
दध्यन्नं पायसं चैव गुडपिष्टं समोदकम्
एतान्सर्वान्समाहृत्य भूमौ कृत्वा ततः शिरः २८९
विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम्
दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम् २९०
रूपं देहि यशो देहि भगं भवति देहि मे
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे २९१
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः
ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि २९२
एवं विनायकं पूज्य ग्रहांश्चैव विधानतः
कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् २९३
आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा
महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् २९४

१२ ग्रहशान्तिप्रकरणम्

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत्
वृष्ट्यायुह्पुष्टिकामो वा तथैवाभिचरन्नपि २९५
सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः २९६
ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ
राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् २९७
स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा
यथावर्णं प्रदेयानि वासांसि कुसुमानि च २९८
गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः
कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् २९९
आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत्



online Sanskrit books

उद्बुध्यस्वेति च ऋचो यथासम्ख्यं प्रकीर्तिताः ३००
बृहस्पते अति यदर्यस्तथैव अन्नात्परिस्रुतः
शं नो देवीस्तथा काण्डात्केतुं कृण्वन्निमांस्तथा ३०१
अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ३०२
एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ३०३
गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम्
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ३०४
दद्याद्ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ३०५
धेनुः शङ्खस्तथानड्वान्हेम वासो हयः क्रमात्
कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ३०६
यश्च यस्य यदा दुहस्थः स तं यत्नेन पूजयेत्
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ३०७
ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ३०८
ग्रहाणामिदमातिथ्यं कुर्यात्सम्वत्सरादपि
आरोग्यबलसम्पन्नो जीवेत्स शरदः शतम् ३०९

## १३ राजधर्मप्रकरणम्

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ३०९
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ३१०
स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यां तथैव च

विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ३११
स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान्स्थिरान्शुचीन्
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ३१२
पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम्
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ३१३
श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ३१४
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ३१५
अस्कन्नमव्यथं चैव प्रायश्चित्तैरदूषितम्
अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ३१६
अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत्
पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ३१७
दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत्
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ३१८
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ३१९
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्
स्वहस्तकालसम्पन्नं शासनं कारयेत्स्थिरम् ३२०
रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत्
तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ३२१
तत्र तत्र च निष्णातानध्यक्षान्कुशलान्शुचीन्
प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ३२२
नातः परतरो धर्मो नृपाणां यद्रणार्जितम्
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ३२३
य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः



online Sanskrit books

अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ३२४
पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम्
राजा सुकृतमादत्ते हतानां विपलायिनाम् ३२५
तवाहम्वादिनं क्लीबं निर्हेतिं परसम्गतम्
न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ३२६
कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम्
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ३२७
हिरण्यं व्यापृतानीतं भाण्डागारेषु निक्षिपेत्
पश्येच्चारांस्ततो दूतान्प्रेषयेन्मन्त्रिसम्गतः ३२८
ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ३२९
संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम्
गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ३३०
सम्विशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च
शास्त्राणि चिन्तयेद्बुद्ध्या सर्वकर्तव्यतास्तथा ३३१
प्रेषयेच्च ततश्चारान्स्वेष्वन्येषु च सादरान्
ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ३३२
दृष्ट्वा ज्योतिर्विदो वैद्यान्दद्याद्गां काञ्चनं महीम्
नैवेशिकानि च ततः श्रोत्रियेभ्यो गृहाणि च ३३३
ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ३३४
पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ३३५
चाटतस्करदुर्वृत्तमहासाहसिकादिभिः
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ३३६
अरक्ष्यमाणाः कुर्वन्ति यत्किम्चित्किल्बिषं प्रजाः

तस्मात्तु नृपतेरर्धं यस्माद्ब्रह्मात्यसौ करान् ३३७
ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम्
साधून्सम्मानयेद्राजा विपरीतांश्च घातयेत् ३३८
उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत्
सद्दानमानसत्कारान्श्रोत्रियान्वासयेत्सदा ३३९
अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत्
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ३४०
प्रजापीडनसम्तापात्समुद्भूतो हुताशनः
राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा न निवर्तते ३४१
य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ३४२
यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः
तथैव परिपाल्योऽसौ यदा वशमुपागतः ३४३
मन्त्रमूलं यतो राज्यं तस्मान्मन्त्रं सुरक्षितम्
कुर्याद्यथास्य न विदुः कर्मणामाफलोदयात् ३४४
अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ३४५
उपायाः साम दानं च भेदो दण्डस्तथैव च
सम्यक्प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ३४६
सम्धिं च विग्रहं यानमासनं संश्रयं तथा
द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत् ३४७
यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ३४८
दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ३४९
केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः



online Sanskrit books

सम्योगे केचिदिच्छन्ति फलं कुशलबुद्धयः ३५०
यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्
एवं पुरुषकारेण विना दैवं न सिध्यति ३५१
हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ३५२
स्वाम्यमात्या जनो दुर्गं कोशो दण्डस्तथैव च
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ३५३
तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत्
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ३५४
स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना
सत्यसम्धेन शुचिना सुसहायेन धीमता ३५५
यथाशास्त्रं प्रयुक्तः सन्सदेवासुरमानवम्
जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ३५६
अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम्
सम्यक् तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ३५७
अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा
नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ३५८
यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत्
इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ३५९
इति सम्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक्
व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतो अन्वहम् ३६०
कुलानि जातीः श्रेणीश्च गणान्जानपदानपि
स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ३६१
जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम्
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ३६२
गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः

कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ३६३
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्
द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ३६४
शतमानं तु दशभिर्धरणैः पलमेव तु
निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ३६५
साशीतिपणसाहस्रो दण्ड उत्तमसाहसः
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ३६६
धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा
योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे ३६७
ज्ञात्वापराधं देशं च कालं बलमथापि वा
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ३६८
इत्याचाराध्यायः

व्यवहाराध्यायः

१ साधारणव्यवहारमातृकाप्रकरणम्

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः १
श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः २
अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ३
रागाल् लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः
सभ्याः पृथक् पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ४
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ५
प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना

समामासतदर्धाहर्नामजात्यादिचिह्नितम् ६
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ
ततो ऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ७
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतो ऽन्यथा
चतुष्पाद्व्यवहारो ऽयं विवादेषूपदर्शितः ८

## २ असाधारणव्यवहारमातृकाप्रकरणम्

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ९
कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये १०
निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ११
साहसस्तेयपारुष्यगोऽअभिशापात्यये स्त्रियाम्
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः १२
देशाद्देशान्तरं याति सृक्किणी परिलेढि च
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च १३
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषिते
वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि १४
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः
अभियोगे ऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः १५
सम्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्
न चाहूतो वदेत्किम्चिद्धीनो दण्ड्यश्च स स्मृतः १६
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः १७
सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत्

दराडं च स्वपणं चैव धनिने धनमेव च  १८
छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः  १९
निह्नुते लिखितं नैकमेकदेशे विभावितः
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः  २०
स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः  २१
प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्
एषामन्यतमाभावे दिव्यान्यतममुच्यते  २२
सर्वेष्वर्थविवादेषु बलवत्युत्तराक्रिया
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा  २३
पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी
परेण भुज्यमानाया धनस्य दशवार्षिकी  २४
आधिसीमोपनिक्षेपजडबालधनैर्विना
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि  २५
आध्यादीनां विहर्तारं धनिने दापयेद्धनम्
दराडं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा  २६
आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात्
आगमेऽपि बलं नैव भुक्तिः स्तोकाअपि यत्र नो  २७
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी  २८
योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत्
न तत्र कारणं भुक्तिरागमेन विनाकृता  २९
नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम्  ३०
बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत्



online Sanskrit books

स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ३१
मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ३२
प्रनष्टाधिगतं देयं नृपेण धनिने धनम्
विभावयेन्न चेल् लिङ्गैस्तत्समं दण्डमर्हति ३३
राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनह्
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ३४
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ३५
देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ३६

## ३ ऋणादानप्रकरणम्

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ३७
कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ३८
सम्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ३९
प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्
साध्यमानो नृपं गच्छन्दण्ड्यो दाप्यश्च तद्धनम् ४०
गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ४१
राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम्
पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ४२
हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्

ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ४३
दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्
मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम् ४४
अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत्
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ४५
न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ४६
सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ४७
गोपशौण्डिकशैलूषरजकव्याधयोषिताम्
ऋणं दद्यात्पतिस्तेषां यस्माद्वृत्तिस्तदाश्रया ४८
प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्
स्वयम्कृतं वा यदृणं न अन्यत्स्त्री दातुमर्हति ४९
पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ५०
रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ५१
भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ५२
दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ५३
दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ५४
बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम्
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ५५
प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम्



online Sanskrit books

द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्  ५६
सम्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च
वस्त्रं चतुर्गुणं प्रोक्तं रसश्च अष्टगुणस्तथा  ५७
आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते
काले कालकृतो नश्येत्फलभोग्यो न नश्यति  ५८
गोप्याधिभोगे नो वृद्धिः सोपकारे च हापिते
नष्टो देयो विनष्टश्च दैवराजकृतादृते  ५९
आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम्
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ६०
चरित्रबन्धककृतं स वृद्ध्या दापयेद्धनं
सत्यं कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्  ६१
उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात्  ६२
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः
विना धारणकाद्वापि विक्रीणीत ससाक्षिकम्  ६३
यदा तु द्विगुणीभूतमृणमाधौ तदा खलु
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने  ६४

४ उपनिधिप्रकरणम्

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्  ६५
न दाप्योऽपहृतं तं तु राजदैविकतस्करैः
भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम्  ६६
आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम्
याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः  ६७



online Sanskrit books

## ५ साक्षिप्रकरणम्

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ६८
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ६९
स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः
रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ७०
पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ७१
उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्
सर्वः साक्षी सम्ग्रहणे चौर्यपारुष्यसाहसे ७२
साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान्
ये पातककृतां लोका महापातकिनां तथा ७३
अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम्
स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ७४
सुकृतं यत्त्वया किम्चिज् जन्मान्तरशतैः कृतम्
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ७५
अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम्
राज्ञा सर्वं प्रदाप्यः स्यात्षट्चत्वारिंशकेऽहनि ७६
न ददाति हि यः साक्ष्यं जानन्नपि नराधमः
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ७७
द्वैधे बहूनां वचनं समेषु गुणिनां तथा
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ७८
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्
अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ७९
उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः



online Sanskrit books

द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ८०
पृथक् पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ८१
यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ८२
वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ८३

## ६ लेख्यप्रकरणम्

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्
लेख्यं तु साक्षिमत् कार्यं तस्मिन्धनिकपूर्वकम् ८४
समामासतदर्धाहर्नामजातिस्वगोत्रकैः
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ८५
समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ८६
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ८७
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ८८
विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत्
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ८९
ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु
आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ९०
देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा
भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ९१
सम्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः

युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ९२
लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम्
धनी वोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ९३
दत्त्वर्णं पाटयेल् लेख्यं शुद्ध्यै वान्यत्तु कारयेत्
साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ९४

७ दिव्यप्रकरणम्

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ९५
रुच्या वान्यतरः कुर्यादितरो वर्तयेच्छिरः
विनापि शीर्षकात्कुर्यान्नृपद्रोहेऽथ पातके ९६
सचैलं स्नातमाहूय सूर्योदय उपोषितम्
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ९७
तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ९८
नासहस्राद्धरेत्फालं न विषं न तुलां तथा
नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ९९
तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः
प्रतिमानसमीभूतो रेखां कृत्वावतारितः १००
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता
तत्सत्यं वद कल्याणि संशयान्मां विमोचय १०१
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् १०२
करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत्
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् १०३
त्वमग्ने सर्वभूतानामन्तश्चरसि पावक



online Sanskrit books

साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम १०४
तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम्
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि १०५
स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्
षोडशान्गुलकं ज्ञेयं मण्डलं तावदन्तरम् १०६
मुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्
अन्तरा पतिते पिण्डे सम्देहे वा पुनर्हरेत् १०७
सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम्
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं वशेत् १०८
समकालमिषुं मुक्तमानीयान्यो जवी नरः
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् १०९
त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवर्स्थितः
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ११०
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम्
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् १११
देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत्
संस्राव्य पाययेत्तस्माज् जलं तु प्रसृतित्रयम् ११२
अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम्
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ११३

८ दायविभागप्रकरणम्

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ११४
यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ११५
शक्तस्यानीहमानस्य किम्चिद्दत्त्वा पृथक् क्रिया

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः  ११६
विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं समम्
मातुर्दुहितरः शेषमृणात्ताभ्य ऋृतेऽन्वयः  ११७
पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम्
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत्  ११८
क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च  ११९
सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः
अनेकपितृकाणां तु पितृतो भागकल्पना  १२०
भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि  १२१
विभक्तेषु सुतो जातः सवर्णायां विभागभाक्
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्  १२२
पितृभ्यां यस्य तद्दत्तं तत्तस्यैव धनं भवेत्
पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्  १२३
असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः
भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम्  १२४
चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः  १२५
अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः  १२६
अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः  १२७
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा  १२८
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः

कानीनः कन्यकाजातो मातामहसुतो मतः १२९
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् १३०
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः
दत्त्वात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः १३१
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः
पिण्डदोऽंशहरश्चैषां पूर्वाभावे परः परः १३२
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः
जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत् १३३
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते १३४
पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः १३५
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः १३६
वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः १३७
संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः
दद्यादपहरेच्चांशं जातस्य च मृतस्य च १३८
अन्योदर्यस्तु संसृष्टी न अन्योदर्यो धनं हरेत्
असंसृष्ट्यपि वादद्यात् संसृष्टो नान्यमातृजः १३९
क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः
अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः १४०
औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः
सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः १४१
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः

निर्वास्या व्यभिचारिरायः प्रतिकूलास्तथैव च १४२
पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् १४३
बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च
अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः १४४
अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि
दुहितृणां प्रसूता चेच्छेषेषु पितृगामि तत् १४५
दत्त्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम्
मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् १४६
दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति १४७
अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकल्पयेत् १४८
विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः १४९

## ९ सीमाविवादप्रकरणम्

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः
गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः १५०
नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् १५१
सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः १५२
अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम्
अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता १५३
आरामायतनग्रामनिपानोद्यानवेश्मसु

एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु १५४
मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः १५५
न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः
परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः १५६
स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत्
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः १५७
फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत्
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् १५८

## १० स्वामिपालविवादप्रकरणम्

माषानष्टौ तु महिषी सस्यघातस्य कारिणी
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् १५९
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् १६०
यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम्
गोपस्ताड्यश्च गोमी तु पूर्वोक्तं दण्डमर्हति १६१
पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते
अकामतः कामचारे चौरवद्दण्डमर्हति १६२
महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः
पालो येषां न ते मोच्या दैवराजपरिप्लुताः १६३
यथार्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः १६४
पालदोषविनाशे तु पाले दण्डो विधीयते
अर्धत्रयोदशपणः स्वामिनो द्रव्यमेव च १६५
ग्राम्येच्छया गोप्रचारो भूमिराजवशेन वा

द्विजस्तृणैधःपुष्पाणि सर्वतः सर्वदा हरेत्  १६६
धनुःशतं परीणाहो ग्रामे क्षेत्रान्तरं भवेत्
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम्  १६७

११ अस्वामिविक्रयप्रकरणम्

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः  १६८
नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम्
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत्  १६९
विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम्
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी  १७०
आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते  १७१
हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात्
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् १७२
शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्
अर्वाक् सम्वत्सरात्स्वामी हरेत परतो नृपः  १७३
पणानेकशफे दद्याच्चतुरः पञ्च मानुषे
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके  १७४

१२ दत्ताप्रदानिकप्रकरणम्

स्वं कुटुम्बाविरोधेन देयं दारसुतादृते
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्  १७५
प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः
देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः  १७६



online Sanskrit books

## १३ क्रीतानुशयप्रकरणम्

दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम्
बीजायो वाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् १७७
अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि १७८
शते दशपला वृद्धिरौर्णे कार्पाससौत्रिके
मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता १७९
कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः
न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च १८०
देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम्
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् १८१

## १४ अभ्युपेत्याशुश्रूषाप्रकरणम्

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि १८२
प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम्
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः १८३
कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः १८४

## १५ सम्विद्व्यतिक्रमप्रकरणम्

राजा कृत्वा पुरे स्थानं ब्राह्मणान्नयस्य तत्र तु
त्रैविद्यं वृत्तिमद्ब्रूयात्स्वधर्मः पाल्यतामिति १८५
निजधर्माविरोधेन यस्तु समयिको भवेत्
सोऽपि यत्नेन सम्रक्ष्यो धर्मो राजकृतश्च यः १८६
गणद्रव्यं हरेद्यस्तु सम्विदं लङ्घयेच्च यः

सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् १८७
कर्तव्यं वचनं सर्वैः समूहहितवादिनाम्
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् १८८
समूहकार्य आयातान्कृतकार्यान्विसर्जयेत्
स दानमानसत्कारैः पूजयित्वा महीपतिः १८९
समूहकार्यप्रहितो यल् लभेत तदर्पयेत्
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् १९०
धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः
कर्तव्यं वचनं तेषां समूहहितवादिनाम् १९१
श्रेणिनैगमपाखण्डगणानामप्ययं विधिः
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत् १९२

## १६ वेतनादानप्रकरणम्

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत्
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः १९३
दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता १९४
देशं कालं च योऽतीयाल् लाभं कुर्याच्च योऽन्यथा
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके १९५
यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् १९६
अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् १९७
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सम्त्यजन्
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च १९८

## १७ द्यूतसमाह्वयप्रकरणम्

ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् १९९
स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम्
जितमुद्ग्राहयेज् जेत्रे दद्यात्सत्यं वचः क्षमी २००
प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले
जितं ससभिके स्थाने दापयेदन्यथा न तु २०१
द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि
राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः २०२
द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात्
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये २०३

## १८ वाक्पारुष्यप्रकरणम्

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम्
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् २०४
अभिगन्तास्मि भगिनीं मातरं वा तवेति ह
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् २०५
अर्धोऽधर्मेषु द्विगुणः परस्त्रीषूत्तमेषु च
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः २०६
प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः
वर्णानां आनुलोम्येन तस्मादर्धार्धहानितः २०७
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः
सत्यस्तदर्धिकः पादनासाकर्णकरादिषु २०८
अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु २०९
पतनीयकृते क्षेपे दण्डो मध्यमसाहसः

उपपातकयुक्ते तु दाप्यः प्रथमसाहसम्  २१०
त्रैविद्यनृपदेवानां क्सेप उत्तमसाहसः
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः  २११

## १९ दराडपारुष्यप्रकरराम्

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात्  २१२
भस्मपङ्करजः स्पर्शे दराडो दशपराः स्मृतः
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुरास्ततः  २१३
समेष्वेवं परस्त्रीषु द्विगुरास्तूत्तमेषु च
हीनेष्वर्धदमो मोहमदादिभिरदराडनम्  २१४
विप्रपीडाकरं छेद्यमङ्गमब्राह्मरास्य तु
उद्गूर्णे प्रथमो दराडः संस्पर्शे तु तदर्धिकः  २१५
उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः  २१६
पादकेशांशुककरोल्लुञ्चनेषु परान्दश
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः  २१७
शोरितेन विना दुह्खं कुर्वन्काष्ठादिभिर्नरः
द्वात्रिंशतं परान्दराड्यो द्विगुरां दर्शनेऽसृजः  २१८
करपाददतो भङ्गे छेदने कर्रानासयोः
मध्यो दराडो व्रराोद्भेदे मृतकल्पहते तथा  २१९
चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने
कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः  २२०
एकं घ्नतां बहूनां च यथोक्ताद्द्विगुराो दमः
कलहापहृतं देयं दराडश्च द्विगुरास्ततः  २२१
दुह्खमुत्पादयेद्यस्तु स समुत्थानजं व्ययम्



online Sanskrit books

दाप्यो दराडं च यो यस्मिन्कलहे समुदाहृतः २२२
अभिघाते तथा छेदे भेदे कुड्यावपातने
पणान्दाप्यः पञ्च दश विंशतिं तद्व्ययं तथा २२३
दुह्खोत्पादि गृहे द्रव्यं क्षिपन्प्राणहरं तथा
षोडशाद्यः पणान्दाप्यो द्वितीयो मध्यमं दमम् २२४
दुह्खे च शोणितोत्पादे शाखाङ्गच्छेदने तथा
दराडः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् २२५
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च
महापशूनामेतेषु स्थानेषु द्विगुणो दमः २२६
प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः २२७
चैत्यश्मशानसीमासु पुरायस्थाने सुरालये
जातद्रुमाणां द्विगुणो दमो वृक्षे च विश्रुते २२८
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्
पूर्वस्मृतादर्धदराडः स्थानेषूक्तेषु कर्तने २२९

## २० साहसप्रकरणम्

सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम्
तन्मूल्याद्द्विगुणो दराडो निह्नवे तु चतुर्गुणः २३०
यः साहसं कारयति स दाप्यो द्विगुणं दमम्
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणम् २३१
अर्घ्याक्षेपातिक्रमकृद्भ्रातृभार्याप्रहारकः
सम्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् २३२
सामन्तकुलिकादीनामपकारस्य कारकः
पञ्चाशत्पणिको दराड एषामिति विनिश्चयः २३३
स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधावकः

अकारणे च विक्रोष्टा चण्डालश्चोत्तमान्स्पृशेत् २३४
शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् २३५
वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत्
साधारणस्यापलापी दासीगर्भविनाशकृत् २३६
पितृपुत्रस्वसृभातृदम्पत्याचार्यशिष्यकाः
एषामपतितान्योन्यत्यागी च शतदण्डभाक् २३७
वसानस्त्रीन्पणान्दण्ड्यो नेजकस्तु परांशुकम्
विक्रयावक्रयाधानयाचितेषु पणान्दश २३८
पितापुत्रविरोधे तु साक्षिणां त्रिपणो दमः
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः २३९
तुलाशासनमानानां कूटकृन्नाणकस्य च
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् २४०
अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम्
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् २४१
भिषङ्‌ मिथ्याचरन्दण्ड्यस्तिर्यक्षु प्रथमं दमम्
मानुषे मध्यमं राजपुरुषेषूत्तमं दमम् २४२
अबन्ध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् २४३
मानेन तुलया वापि योऽअमष्टमकं हरेत्
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् २४४
भेषजस्नेहलवणगन्धधान्यगुडादिषु
पण्येषु प्रक्षिपन्हीनं पणान्दाप्यस्तु षोडश २४५
मृच्चर्ममणिसूत्रायः काष्ठवल्कलवाससाम्
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः २४६
समुद्गपरिवर्तं च सारभाण्डं च कृत्रिमम्

अाधानं विक्रयं वापि नयतो दराडकल्पना २४७
भिन्ने पणे च पञ्चाशत्पणे तु शतमुच्यते
द्विपणे द्विशतो दराडो मूल्यवृद्धौ च वृद्धिमान् २४८
सम्भूय कुर्वतामर्घं सम्बाधं कारुशिल्पिनाम्
अर्घस्य ह्रासं वृद्धिं वा जानतो दम उत्तमः २४९
सम्भूय वणिजां परायमनर्घेणोपरुन्धताम्
विक्रीणतां वा विहितो दराड उत्तमसाहसः २५०
राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः
क्रयो वा निह्स्रवस्तस्माद्वणिजां लाभकृत्स्मृतः २५१
स्वदेशपराये तु शतं वणिग्गृह्णीत पञ्चकम्
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी २५२
परायस्योपरि संस्थाप्य व्ययं परायसमुद्भवम्
अर्घोऽनुग्रहकृत्कार्यः क्रेतुर्विक्रेतुरेव च २५३

## २१ विक्रीयासम्प्रदानप्रकरणम्

गृहीतमूल्यं यः परायं क्रेतुर्नैव प्रयच्छति
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते २५४
विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् २५५
राजदैवोपघातेन पराये दोषमुपागते
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः २५६
अन्यहस्ते च विक्रीय दुष्टं वादुष्टवद्यदि
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् २५७
क्षयं वृद्धिं च वणिजा परायानामविजानता
क्रीत्वा नानुशयः कार्यः कुर्वन्षड्भागदराडभाक् २५८

## २२ सम्भूयसमुत्थानप्रकरणम्

समवायेन वणिजां लाभार्थं कर्म कुर्वताम्
लाभालाभौ यथाद्रव्यं यथा वा सम्विदा कृतौ २५९
प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्
स तद्दद्याद्विप्लवाच्च रक्षिताद्दशमांशभाक् २६०
अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्
व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् २६१
मिथ्या वदन्परीमाणं शुल्कस्थानादपासरन्
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी २६२
तरिकः स्थलजं शुल्कं गृह्णन्दाप्यः पणान्दश
ब्राह्मणप्रातिवेश्यानामेतदेव अनिमन्त्रणे २६३
देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः
ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः २६४
जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्
अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम् २६५

## २३ स्तेयप्रकरणम्

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा
पूर्वकर्मापराधी च तथा चाशुद्धवासकः २६६
अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः २६७
परद्रव्यगृहाणां च पृच्छका गूढचारिणः
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः २६८
गृहीतः शङ्कया चौर्ये नात्मानं चेद्विशोधयेत्
दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् २६९
चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्  २७०
घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते
विवीतभर्तुस्तु पथि चौरोद्धर्तुरवीतके  २७१
स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथ वा पुनः  २७२
बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः
प्रसह्यघातिनश्चैव शूलानारोपयेन्नरान् २७३
उत्क्षेपकग्रन्थिभेदौ करसम्दंशहीनकौ
कार्यौ द्वितीयापराधे करपादैकहीनकौ  २७४
क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः
देशकालवयः शक्ति सम्चिन्त्यं दण्डकर्मणि  २७५
भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्
दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः  २७६
शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः
उत्तमो वाधमो वापि पुरुषस्त्रीप्रमापणे  २७७
विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्
सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत्  २७८
विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम्
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्  २७९
अविज्ञातहतस्याशु कलहं सुतबान्धवाः
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक्  २८०
स्त्रीद्रव्यवृत्तिकामो वा केन वायं गतः सह
मृत्युदेशसमासन्नं पृच्छेद्वापि जनं शनैः  २८१
क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना  २८२

## २४ स्त्रीसम्ग्रहणप्रकरणम्

पुमान्सम्ग्रहणे ग्राह्यः केशाकेशि परस्त्रिया
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा २८३
नीवीस्तनप्रावरणसक्थिकेशावमर्शनम्
अदेशकालसम्भाषं सहैकासनमेव च २८४
स्त्री निषेधे शतं दद्याद्द्विशतं तु दमं पुमान्
प्रतिषेधे तयोर्दण्डो यथा सम्ग्रहणे तथा २८५
सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् २८६
अलम्कृतां हरन्कन्यामुत्तमं ह्यन्यथाधमम्
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः २८७
सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः
दूषणे तु करच्छेद उत्तमायां वधस्तथा २८८
शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने
पशून्गच्छन्शतं दाप्यो हीनां स्त्रीं गां च मध्यमम् २८९
अवरुद्धासु दासीसु भुजिष्यासु तथैव च
गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम् २९०
प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः
बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक् २९१
गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत्
अगृहीते समं दाप्यः पुमानप्येवमेव हि २९२
अयोनौ गच्छतो योषां पुरुषं वाभिमेहतः
चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे २९३
अन्त्याभिगमने त्वङ्कचहङ्कच कुबन्धेन प्रवासयेत्
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः २९४

## २५ प्रकीर्णकप्रकरणम्

ऊनं वाभ्यधिकं वापि लिखेद्यो राजशासनम्
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः २९५
अभक्ष्येण द्विजं दूष्यो दण्डय उत्तमसाहसम्
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकम् २९६
कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी
त्र्यङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् २९७
चतुष्पादकृतो दोषो नापेहीति प्रजल्पतः
काष्ठलोष्टेषुपाषाणबाहुयुग्यकृतस्तथा २९८
छिन्ननस्येन यानेन तथा भग्नयुगादिना
पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक् २९९
शक्तोऽप्यमोक्षयन्स्वामी दम्ष्ट्रिणां शृङ्गिणां तथा
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ३००
जारं चौरेत्यभिवदन्दाप्यः पञ्चशतं दमम्
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ३०१
राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम्
तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ३०२
मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा
राजयानासनारोढुर्दण्ड उत्तमसाहसः ३०३
द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ३०४
दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ३०५
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः
तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ३०६
राज्ञान्यायेन यो दण्डो गृहीतो वरुणाय तम्

निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ३०७
इति व्यवहाराध्यायः

## अथ प्रायश्चित्ताध्यायः

### १ आशौचप्रकरणम्

ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः १
यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् २
सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः
अप नः शोशुचदघमनेन पितृदिङ्मुखाः ३
एवं मातामहाचार्यप्रेतानामुदकक्रिया
कामोदकं सखिप्रत्तास्वस्त्रीयश्वशुरर्त्विजाम् ४
सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः
न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ५
पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ६
कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान्
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ७
मानुष्ये कदलीस्तम्भनिह्सारे सारमार्गणम्
करोति यः स सम्मूढो जलबुद्बुदसन्निभे ८
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ९
गन्त्री वसुमती नाशमुदधिर्दैवतानि च
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति १०
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः

अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः  ११
इति संश्रुत्य गच्छेयुर्गृहं बालपुरहृसराः
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः  १२
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः  १३
प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि
इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसम्यमान् १४
आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती
सम्कटान्नं च नाश्नीयान्न च तैः सह सम्वसेत्  १५
क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् क्षितौ
पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम्  १६
जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये
वैतानाउपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्  १७
त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते
ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि  १८
पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्
तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात्  १९
अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति
गर्भस्त्रावे मासतुल्या निशाः शुद्धेस्तु कारणम्  २०
हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्
प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः  २१
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः  २२
आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्  २३
अहस्त्वदत्तकन्यासु बालेषु च विशोधनम्

गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च २४
अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च
निवासराजनि प्रेते तदहः शुद्धिकारणम् २५
ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित्
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः २६
महीपतीनां नाशौचं हतानां विद्युता तथा
गोब्राह्मणार्थं सम्ग्रामे यस्य चेच्छति भूमिपः २७
ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा २८
दाने विवाहे यज्ञे च सम्ग्रामे देशविप्लवे
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते २९
उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत्
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ३०
कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम्
पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ३१
अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत्
शोध्यस्य मृच्च तोयं च सम्न्यासो वै द्विजन्मनाम् ३२
तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम्
जपः प्रच्छन्नपानानां मनसः सत्यमुच्यते ३३
भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम्
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ३४

## २ आपद्धर्मप्रकरणम्

क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः
निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि ३५
फलोपलक्षौमसोममनुष्यापूपवीरुधः

तिलौदनरसक्षारान्दधि क्षीरं घृतं जलम्  ३६
शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः
मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितिः  ३७
कौशेयनीललवणमांसैकशफसीसकान्
शकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च  ३८
वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन
धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः  ३९
लाक्षालवणमांसानि पतनीयानि विक्रये
पायो दधि च मद्यं च हीनवर्णकराणि तु  ४०
आपद्गतः सम्प्रगृह्णन्भुञ्जानो वा यतस्ततः
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः  ४१
कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः
सेवानूपं नृपो भैक्षमापत्तौ जीवनानि तु  ४२
बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्
प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः  ४३
तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः
ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत्  ४४

## ३  वानप्रस्थधर्मप्रकरणम्

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम्
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्  ४५
अफालकृतेनाग्नींश्च पितृन्देवातिथीनपि
भृत्यांश्च तर्पयेत्श्मश्रुजटालोमभृदात्मवान् ४६
अह्नो मासस्य षण्णां वा तथा सम्वत्सरस्य वा
अर्थस्य सम्चयं कुर्यात्कृतमाश्वयुजे त्यजेत्  ४७
दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात्

स्वाध्यायवान्दानशीलः सर्वसत्त्वहिते रतः ४८
दन्तोलूखलिकः कालपक्वाशी वाश्मकुट्टकः
श्रौत्रं स्मार्तं फलस्नेहैः कर्म कुर्यात्तथा क्रियाः ४९
चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्तयेत्सदा
पक्षे गते वाप्यश्नीयान्मासे वाहनि वा गते ५०
स्वप्याद्भूमौ शुची रात्रौ दिवा सम्प्रपदैर्नयेत्
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ५१
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः
आर्द्रवासास्तु हेमन्ते शक्त्या वापि तपश्चरेत् ५२
यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ५३
अग्नीन्वाप्यात्मसात्कृत्वा वृक्षावासो मिताशनः
वानप्रस्थगृहेष्वेव यात्रार्थं भैक्षमाचरेत् ५४
ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः
वायुभक्षः प्रागुदीचीं गच्छेद्वावर्ष्मसम्क्षयात् ५५

## ४ यतिधर्मप्रकरणम्

वनाद्गृहाद्वा कृत्वा इष्टिं सार्ववेदसदक्षिणाम्
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ५६
अधीतवेदो जपकृत्पुत्रवानन्नदो अग्निमान्
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ५७
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ५८
अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभिलक्षितः
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ५९
यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च



online Sanskrit books

सलिलं शुद्धिरेतेषां गोवालैश्च ग्रवघर्षणम् ६०
सन्निरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च
भयं हित्वा च भूतानाममृतीभवति द्विजः ६१
कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः
ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ६२
ग्रवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा
ग्राधयो व्याधयः क्लेशा जरा रूपविपर्ययः ६३
भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः
ध्यानयोगेन सम्पश्येत्सूक्ष्म ग्रात्मात्मनि स्थितः ६४
नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः
ग्रतो यदात्मनोऽपथ्यं परेषां न तदाचरेत् ६५
सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः
सम्यतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ६६
निह्सरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ६७
तत्रात्मा हि स्वयं किम्चित्कर्म किम्चित्स्वभावतः
करोति किम्चिदभ्यासाद्धर्माधर्मोभयात्मकम् ६८
निमित्तमक्षरः कर्ता बोद्धा गुणी वशी
ग्रजः शरीरग्रहणात्स जात इति कीर्त्यते ६९
सर्गादौ स यथाकाशं वायुं ज्योतिर्जलं महीम्
सृजत्येकोत्तरगुणांस्तथादत्ते भवन्नपि ७०
ग्राहुत्याप्यायते सूर्यः सूर्याद्वृष्टिरथौषधिः
तदन्नं रसरूपेण शुक्रत्वमधिगच्छति ७१
स्त्रीपुंसयोस्तु सम्योगे विशुद्धे शुक्रशोणिते
पञ्चधातून्स्वयं षष्ठ ग्रादत्ते युगपत्प्रभुः ७२
इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः



online Sanskrit books

धारणा प्रेरणं दुह्खमिच्छाहम्कार एव च ७३
प्रयत्न स्राकृतिर्वर्णः स्वरद्वेषौ भवाभवौ
तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः ७४
प्रथमे मासि सम्क्लेदभूतो धातुविमूर्च्छितः
मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः ७५
स्राकाशाल् लाघवं सौद्म्यं शब्दं श्रोत्रं बलादिकम्
वायोश्च स्पर्शनं चेष्टां व्यूहनं रौद्त्यमेव च ७६
पित्तात्तु दर्शनं पक्तिमौष्णयं रूपं प्रकाशिताम्
रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम् ७७
भूमेर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च
स्रात्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः ७८
दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात्
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ७९
स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः
षष्ठे बलस्य वर्णस्य नखरोम्णां च सम्भवः ८०
मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुशिरायुतः
सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ८१
पुनर्धात्रीं पुनर्धर्ममोजस्तस्य प्रधावति
स्रष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ८२
नवमे दशमे वापि प्रबलैः सूतिमारुतैः
निह्सार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ८३
तस्य षोढा शरीराणि शट् त्वचो धारयन्ति च
सडङ्गानि तथास्थ्नां च सह षष्ट्या शतत्रयम् ८४
स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः
पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ८५
षष्ट्यङ्गुलीनां द्वे पाष्णर्योर्गुल्फेषु च चतुष्टयम्

चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ८६
द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे
अक्षतालूषके श्रोणीफलके च विनिर्दिशेत् ८७
भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च
ग्रीवा पन्चदशास्थिः स्याज् जत्र्वेकैकं तथा हनुः ८८
तन्मूले द्वे ललाटाक्षिगण्डे नासा घनास्थिका
पार्श्वकाः स्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः ८९
द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा
उरः सप्तदशास्थीनि पुरुषस्यास्थिसम्ग्रहः ९०
गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः
नासिका लोचने जिह्वा त्वक् श्रोत्रं च इन्द्रियाणि च ९१
हस्तौ पायुरुपस्थं च जिह्वा पादौ च पञ्च वै
कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम् ९२
नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा
मूर्धांसकण्ठहृदयं प्राणस्यायतनानि तु ९३
वपा वसावहननं नाभिः क्लोम यकृत्प्लिहा
क्षुद्रान्त्रं वृक्ककौ बस्तिः पुरीषाधानमेव च ९४
आमाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च
उदरं च गुदौ कोष्ठ्यौ विस्तारोऽयमुदाहृतः ९५
कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ
कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ९६
वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसम्घातजौ स्तनौ
उपजिह्वास्फिजौ बाहू जङ्घोरुषु च पिण्डिका ९७
तालूदरं बस्तिशीर्षं चिबुके गलशुण्डिके
अवटश्चैवमेतानि स्थानान्यत्र शरीरके ९८
अक्षिकर्णचतुष्कं च पद्भ्हस्तहृदयानि च

नव छिद्राणि तान्येव प्राणस्यायतनानि तु ९९
शिराः शतानि सप्तैव नव स्नायुशतानि च
धमनीनां शते द्वे तु पञ्च पेशीशतानि च १००
एकोनत्रिंशल्लक्षाणि तथा नव शतानि च
षट्पञ्चाशच्च जानीत शिरा धमनिसम्ज्ञिताः १०१
त्रयो लक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम्
सप्तोत्तरं मर्मशतं द्वे च सम्धिशते तथा १०२
रोम्णां कोटयस्तु पञ्चाशच्चतस्रः कोटय एव च
सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदायनैः सह १०३
वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः
यद्यप्येकोऽनुवेत्त्येषां भावनां चैव संस्थितिम् १०४
रसस्य नव विज्ञेया जलस्याञ्जलयो दश
सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्तिताः १०५
षट् श्लेष्मा पञ्च पित्तं तु चत्वारो मूत्रमेव च
वसा त्रयो द्वौ तु मेदो मज्जैकोर्ध्वं तु मस्तके १०६
श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु
इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ १०७
द्वासप्ततिसहस्राणि हृदयादभिनिह्सृताः
हिताहिता नाम नाडयस्तासां मध्ये शशिप्रभम् १०८
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु १०९
ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान्
योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ११०
अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम्
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः १११
यथाविधानेन पठन्सामगायमविच्युतम्



online Sanskrit books

सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति  ११२
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा
औवेणकं सरोबिन्दुमुत्तरं गीतकानि च  ११३
ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका
गेयमेतत्तदभ्यासकरणान्मोक्षसम्ज्ञितम्  ११४
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति  ११५
गीतज्ञो यदि योगेन नाप्नोति परमं पदम्
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते  ११६
अनादिरात्मा कथितस्तस्यादिस्तु शरीरकम्
आत्मनस्तु जगत्सर्वं जगतश्चात्मसम्भवः  ११७
कथमेतद्विमुह्यामः सदेवासुरमानवम्
जगदुद्भूतमात्मा च कथं तस्मिन्वदस्व नः  ११८
मोहजालमपास्येह पुरुषो दृश्यते हि यः
सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रकः  ११९
स आत्मा चैव यज्ञश्च विश्वरूपः प्रजापतिः
विराजः सोऽन्नरूपेण यज्ञत्वमुपगच्छति  १२०
यो द्रव्यदेवतात्यागसम्भूतो रस उत्तमः
देवान्सम्तर्प्य स रसो यजमानं फलेन च  १२१
सम्योज्य वायुना सोमं नीयते रश्मिभिस्ततः
ऋग्यजुः सामविहितं सौरं धामोपनीयते  १२२
खमण्डलादसौ सूर्यः सृजत्यमृतमुत्तमम्
यज् जन्म सर्वभूतानामशनानशनात्मनाम्  १२३
तस्मादन्नात्पुनर्यज्ञः पुनरन्नं पुनः क्रतुः
एवमेतदनाद्यन्तं चक्रं सम्परिवर्तते  १२४
अनादिरात्मा सम्भूतिर्विद्यते नान्तरात्मनः

समवायी तु पुरुषो मोहेच्छाद्वेषकर्मजः १२५
सहस्रात्मा मया यो व आदिदेव उदाहृतः
मुखबाहूरुपज्ञाः स्युस्तस्य वर्णा यथाक्रमम् १२६
पृथिवी पादतस्तस्य शिरसो द्यौरजायत
नस्तः प्राणा दिशः श्रोत्रात्स्पर्शाद्वायुर्मुखाच्छिखी १२७
मनसश्चन्द्रमा जातश्चक्षुषश्च दिवाकरः
जघनादन्तरिक्षं च जगच्च सचराचरम् १२८
यद्येवं स कथं ब्रह्मन्पापयोनिषु जायते
ईश्वरः स कथं भावैरनिष्टैः सम्प्रयुज्यते १२९
करणैरन्वितस्यापि पूर्वं ज्ञानं कथं च न
वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम् १३०
अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः
दोषैः प्रयाति जीवोऽयं भवं योनिशतेषु च १३१
अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम्
रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् १३२
विपाकः कर्मणां प्रेत्य केषाम्चिदिह जायते
इह वामुत्र वैकेषां भावस्तत्र प्रयोजनम् १३३
परद्रव्याण्यभिध्यायंस्तथानिष्टानि चिन्तयन्
वितथाभिनिवेशी च जायतेऽन्यासु योनिषु १३४
पुरुषोऽनृतवादी च पिशुनः परुषस्तथा
अनिबद्धप्रलापी च मृगपक्षिषु जायते १३५
अदत्तादाननिरतः परदारोपसेवकः
हिंसकश्चाविधानेन स्थावरेष्वभिजायते १३६
आत्मज्ञः शौचवान्दान्तस्तपस्वी विजितेन्द्रियः
धर्मकृद्वेदविद्याविद्सात्त्विको देवयोनिताम् १३७
असत्कार्यरतोऽधीर आरम्भी विषयी च यः



online Sanskrit books

स राजसो मनुष्येषु मृतो जन्माधिगच्छति  १३८
निद्रालुः क्रूरकृल् लुब्धो नास्तिको याचकस्तथा
प्रमादवान्भिन्नवृत्तो भवेत्तिर्यक्षु तामसः  १३९
रजसा तमसा चैवं समाविष्टो भ्रमन्निह
भावैरनिष्टैः सम्युक्तः संसारं प्रतिपद्यते  १४०
मलिनो हि यथा आदर्शो रूपालोकस्य न क्षमः
तथाविपक्वकरण आत्मज्ञानस्य न क्षमः  १४१
कट्वेर्वारौ यथापक्वे मधुरः सन्रसोऽपि न
प्राप्यते ह्यात्मनि तथा नापक्वकरणे ज्ञता  १४२
सर्वाश्रयां निजे देहे देही विन्दति वेदनाम्
योगी मुक्तश्च सर्वासां यो न चाप्नोति वेदनाम्  १४३
आकाशमेकं हि यथा घटादिषु पृथग्भवेत्
तथात्मा एको ह्यनेकश्च जलाधारेष्विवांशुमान् १४४
ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः
इमे लोका एष चात्मा तस्माच्च सचराचरम्  १४५
मृद्दण्डचक्रसम्योगात्कुम्भकारो यथा घटम्
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः  १४६
हेममात्रमुपादाय रूपं वा हेमकारकः
निजलालासमायोगात्कोशं वा कोशकारकः  १४७
कारणान्यन्येवमादाय तासु तास्विह योनिषु
सृजत्यात्मानमात्मा च सम्भूय करणानि च  १४८
महाभूतानि सत्यानि यथात्मापि तथैव हि
कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति  १४९
वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम्
अतीतार्थस्मृतिः कस्य को वा स्वप्नस्य कारकः  १५०
जातिरूपवयोवृत्तविद्यादिभिरहम्कृतः

शब्दादिविषयोद्योगं कर्मणा मनसा गिरा १५१
स सम्दिग्धमतिः कर्मफलमस्ति न वेति वा
विप्लुतः सिद्धमात्मानमसिद्धोऽपि हि मन्यते १५२
मम दाराः सुतामात्या अहमेषामिति स्थितिः
हिताहितेषु भावेषु विपरीतमतिः सदा १५३
ज्ञेयज्ञे प्रकृतौ चैव विकारे चाविशेषवान्
अनाशकानलाघातजलप्रपतनोद्यमी १५४
एवम्वृत्तोऽविनीतात्मा वितथाभिनिवेशवान्
कर्मणा द्वेषमोहाभ्यामिच्छया चैव बध्यते १५५
आचार्योपासनं वेदशास्त्रार्थेषु विवेकिता
तत्कर्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः १५६
स्त्र्यालोकालम्भविगमः सर्वभूतात्मदर्शनम्
त्यागः परिग्रहाणां च जीर्णकाषायधारणम् १५७
विषयेन्द्रियसम्रोधस्तन्द्रालस्यविवर्जनम्
शरीरपरिसम्ख्यानं प्रवृत्तिष्वघदर्शनम् १५८
नीरजस्तमसा सत्त्वशुद्धिर्निह्स्पृहता शमः
एतैरुपायैः संशुद्धः सत्त्वयोग्यमृती भवेत् १५९
तत्त्वस्मृतेरुपस्थानात्सत्त्वयोगात्परिक्षयात्
कर्मणां सम्निकर्षाच्च सतां योगः प्रवर्तते १६०
शरीरसम्क्षये यस्य मनः सत्त्वस्थमीश्वरम्
अविप्लुतमतिः सम्यक् स जातिसंस्मरतामियात् १६१
यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम्
नानारूपाणि कुर्वाणस्तथात्मा कर्मजास्तनूः १६२
कालकर्मात्मबीजानां दोषैर्मातुस्तथैव च
गर्भस्य वैकृतं दृष्टमङ्गहीनादि जन्मनः १६३
अहम्कारेण मनसा गत्या कर्मफलेन च

शरीरेण च नात्मायं मुक्तपूर्वः कथम्चन १६४
वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः
विक्रियापि च दृष्टैवमकाले प्राणसम्क्षयः १६५
अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि
सितासिताः कर्बुरूपाः कपिला नीललोहिताः १६६
ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् १६७
यदस्य अन्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम्
तेन देवशरीराणि सधामानि प्रपद्यते १६८
येऽनेकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः
इह कर्मोपभोगाय तैः संसरति सोऽवशः १६९
वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च
आर्त्या गत्या तथागत्या सत्येन ह्यनृतेन च १७०
श्रेयसा सुखदुह्खाभ्यां कर्मभिश्च शुभाशुभैः
निमित्तशाकुनज्ञानग्रहसम्योगजैः फलैः १७१
तारानक्षत्रसम्चारैर्जागरैः स्वप्नजैरपि
आकाशपवनज्योतिर्जलभूतिमिरैस्तथा १७२
मन्वन्तरैर्युगप्राप्त्या मन्त्रौषधिफलैरपि
वित्तात्मानं वेद्यमानं कारणं जगतस्तथा १७३
अहम्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः
इन्द्रियान्तरसम्चार इच्छा धारणजीविते १७४
स्वर्गः स्वप्नश्च भावानां प्रेरणं मनसो गतिः
निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम् १७५
यत एतानि दृश्यन्ते लिङ्गानि परमात्मनः
तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः १७६
बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च

अहम्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि १७७
अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते
ईश्वरः सर्वभूतस्थः सन्नसन्सदसच्च यः १७८
बुद्धेरुत्पत्तिरव्यक्तात्ततोऽहम्कारसम्भवः
तन्मात्रादीन्यहम्कारादेकोत्तरगुणानि च १७९
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः
यो यस्मान्निह्सृतश्चैषां स तस्मिन्नेव लीयते १८०
यथात्मानं सृजत्यात्मा तथा वः कथितो मया
विपाकात्त्रिप्रकाराणां कर्मणामीश्वरोऽपि सन् १८१
सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्तिताः
रजस्तमोभ्यामाविष्टश्चक्रवद्भ्राम्यते ह्यसौ १८२
अनादिरादिमांश्चैव स एव पुरुषः परः
लिङ्गेन्द्रियग्राह्यरूपः सविकार उदाहृतः १८३
पितृयानोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम्
तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति १८४
ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः
तेऽपि तेनैव मार्गेण सत्यव्रतपरायणाः १८५
तत्राष्टाशीतिसाहस्रमुनयो गृहमेधिनः
पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः १८६
सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः
तावन्त एव मुनयः सर्वारम्भविवर्जिताः १८७
तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया
तत्र गत्वावतिष्ठन्ते यावदाभूतसम्प्लवम् १८८
यतो वेदाः पुराणानि विद्योपनिषदस्तथा
श्लोका सूत्राणि भाष्याणि यच्च किम्चन वाङ्मयम् १८९
वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः

श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः १९०
स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः १९१
य एनमेवं विन्दन्ति य वारण्यकमाश्रिताः
उपासते द्विजाः सत्यं श्रद्धया परया युताः १९२
क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम्
अयनं देवलोकं च सवितारं सवैद्युतम् १९३
ततस्तान्पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान्
करोति पुनरावृत्तिस्तेषामिह न विद्यते १९४
यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च १९५
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम्
क्रमात्ते सम्भवन्तीह पुनरेव व्रजन्ति च १९६
एतद्यो न विजानाति मार्गद्वितयमात्मवान्
दन्दशूकः पतङ्गो वा भवेत्कीटोऽथ वा कृमिः १९७
ऊरुस्थोत्तानचरणः सव्ये न्यस्योत्तरं करम्
उत्तानं किम्चिदुन्नाम्य मुखं विष्टभ्य चोरसा १९८
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन्
तालुस्थाचलजिह्वश्च सम्वृतास्यः सुनिश्चलः १९९
सन्निरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् २००
ततो ध्येयः स्थितो योऽसौ हृदये दीपवत्प्रभुः
धारयेत्तत्र चात्मानं धारणां धारयन्बुधः २०१
अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा
निजं शरीरमुत्सृज्य परकायप्रवेशनम् २०२
अर्थानां छन्दतः सृष्टिर्योगसिद्धेर्हि लक्षणम्

सिद्धे योगे त्यजन्देहममृतत्वाय कल्पते २०३
अथ वाप्यभ्यसन्वेदं न्यस्तकर्मा वने वसन्
अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् २०४
न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः
श्राधकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते २०५

५ प्रायश्चित्तप्रकरणम्

महापातकजान्घोरान्नरकान्प्राप्य दारुणान्
कर्मक्षयात्प्रजायन्ते महापातकिनस्त्विह २०६
मृगाश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति
खरपुल्कसवेनानां सुरापो नात्र संशयः २०७
कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात्
तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः २०८
ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः
हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः २०९
यो येन सम्वसत्येषां स तल्लिङ्गोऽभिजायते
अन्नहर्तामयावी स्यान्मूको वागपहारकः २१०
धान्यमिश्रोऽतिरिक्ताञ्गः पिशुनः पूतिनासिकः
तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः २११
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः २१२
हीनजातौ प्रजायेत पररत्नापहारकः
पत्रशाकं शिखी हत्वा गन्धान्छुच्छुन्दरी शुभान् २१३
मूषको धान्यहारी स्याद्यानमुष्ट्रः कपिः फलम्
जलं प्लवः पयः काको गृहकारी ह्युपस्करम् २१४
मधु दंशः पलं गृध्रो गां गोधाग्निं बकस्तथा



online Sanskrit books

श्वित्री वस्त्रं श्वा रसं तु चीरी लवणहारकः २१५
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः २१६
यथाकर्म फलं प्राप्य तिर्यक्त्वं कालपर्ययात्
जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः २१७
ततो निष्कल्मषीभूताः कुले महति भोगिनः
जायन्ते विद्ययोपेता धनधान्यसमन्विताः २१८
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति २१९
तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति २२०
प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः
अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् २२१
तामिस्रं लोहशङ्कुं च महानिरयशाल्मली
रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् २२२
सम्घातं लोहितोदं च सविषं सम्प्रपातनम्
महानरककाकोलं सम्जीवनमहापथम् २२३
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च
असिपत्रवनं चैव तापनं चैकविंशकम् २२४
महापातकजैर्घोरैरुपपातकजैस्तथा
अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः २२५
प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्
कामतो व्यवहार्यस्तु वचनादिह जायते २२६
ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः
एते महापातकिनो यश्च तैः सह सम्वसेत् २२७
गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः

ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् २२८
निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम्
रजस्वलामुखास्वादः सुरापानसमानि तु २२९
अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसम्मितम् २३०
सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च
सगोत्रासु सुतन्त्रीषु गुरुतल्पसमं स्मृतम् २३१
पितुः स्वसारं मातुश्च मतुलानीं स्नुषामपि
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा २३२
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः
लिङ्गं छित्त्वा वधस्तस्य सकामायाः स्त्रिया अपि २३३
गोवधो व्रात्यता स्तेयमृणानां चानपाक्रिया
अनाहिताग्नितापण्यविक्रयः परिदेवनम् २३४
भृतादध्ययनादानं भृतकाध्यापनं तथा
पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया २३५
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः २३६
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम्
पितृमातृसुतत्यागस्तडागारामविक्रयः २३७
कन्यासम्दूषणं चैव परिविन्दकयाजनम्
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् २३८
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम्
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च २३९
इन्धनार्थं द्रुमछेदः स्त्रीहिंसाउषधजीवनम्
हिंस्त्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः २४०
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्



online Sanskrit books

तथैवानाश्रमे वासः परान्नपरिपुष्टता २४१
असच्छास्त्राधिगमनमाकरेष्वधिकारिता
भार्याया विक्रयश्चैषामेकैकमुपपातकम् २४२
शिरःकपाली ध्वजवान्भिक्षाशी कर्म वेदयन्
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् २४३
ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य च
तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् २४४
दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा
दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः २४५
आनीय विप्रसर्वस्वं हृतं घातित एव वा
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति २४६
लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम्
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् २४७
सम्ग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात्
मृतकल्पः प्रहारार्तो जीवन्नपि विशुध्यति २४८
अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य सम्हिताम्
शुध्येत वा मिताशित्वात्प्रतिस्रोतः सरस्वतीम् २४९
पात्रे धनं वा पर्याप्तं दत्त्वा शुद्धिमवाप्नुयात्
आदातुश्च विशुद्ध्यर्थमिष्टैर्वैश्वानरी स्मृता २५०
यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम्
गर्भहा च यथावर्णं तथात्रेयीनिषूदकः २५१
चरेद्व्रतमहत्वापि घातार्थं चेत्समागतः
द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् २५२
सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम्
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति २५३
वालवासा जटी वापि ब्रह्महत्याव्रतं चरेत्

पिरायाकं वा कणान्वापि भक्षयेत्त्रिसमा निशि २५४
अज्ञानात्तु सुरां पीत्वा रेतो विरामूत्रमेव च
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः २५५
पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्
इहैव सा शुनी गृध्री सूकरी चोपजायते २५६
ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत्
स्वकर्म व्याख्यायंस्तेन हतो मुक्तोऽपि वाशुचिः २५७
अनिवेद्य नृपे शुध्येत्सुरापव्रतमाचरन्
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् २५८
तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत्
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां चोत्सृजेत्तनुम् २५९
प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः
चान्द्रायणं वा त्रीन्मासानभ्यसेद्वेदसम्हिताम् २६०
एभिस्तु सम्वसेद्यो वै वत्सरं सोऽपि तत्समः
कन्यां समुद्वहेदेषां सोपवासामकिम्चनाम् २६१
चान्द्रायणं चरेत्सर्वानवकृष्टान्निहत्य तु
शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यति २६२
पञ्चगव्यं पिबेद्गोघ्नो मासमासीत सम्यतः
गोष्ठे शयो गोऽनुगामी गोप्रदानेन शुध्यति २६३
कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वापि समाहितः
दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः २६४
उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा
पयसा वापि मासेन पराकेणाथ वा पुनः २६५
ऋषभैकसहस्रा गा दद्यात्क्षत्रवधे पुमान्
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् २६६
वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम्

षरामासाच्छूद्रहाप्येतद्धेनुर्दद्याद्दशाथ वा  २६७
दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु
दृतिं धनुर्बस्तमविं क्रमाद्दद्याद्विशुद्धये  २६८
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्
अस्थिमतां सहस्रं तु तथानस्थिमताअमनः  २६९
मार्जारगोधानकुलमराडूकांश्च पतत्रिणः
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत्  २७०
गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायनः  २७१
हंसश्येनकपिक्रव्याज् जलस्थलशिखराडिनः
भासं च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम्  २७२
उरगेष्वायसो दराडः पराडके त्रपु सीसकम्
कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽउकम्  २७३
तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन्
दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये  २७४
फलपुष्पान्नरसजसत्त्वघाते घृताशनम्
किम्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके  २७५
वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम्
स्यादोषधिवृथाछेदे क्षीराशी गोऽनुगो दिनम्  २७६
पुंश्चलीवानरखरैर्दष्टश्वोष्ट्रादिवायसैः
प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति  २७७
यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत्
स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत्  २७८
मयि तेज इति छायां स्वां दृष्ट्वाम्बुगतां जपेत्
सावित्रीमशुचौ दृष्टे चापल्ये चानृतेऽपि च  २७९
अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम्



online Sanskrit books

गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति २८०
भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् २८१
उपस्थानं ततः कुर्यात्सं मा सिम्चन्त्वनेन तु
मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च २८२
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति
कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदि २८३
क्रियमाणोपकारे तु मृते विप्रे न पातकम्
विपाके गोवृषाणां तु भेषजाग्निक्रियासु च
मिथ्याभिशंसिनो दोषो द्विः समो भूतवादिनः २८४
मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन्
महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम्
अब्भक्षो मासमासीत स जापी नियतेन्द्रियः २८५
अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा
निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा २८६
अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत्
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति २८७
त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् २८८
गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रतम्
गायत्रीजप्यनिरतः शुध्यतेऽसत्प्रतिग्रहात् २८९
प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् २९०
गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् २९१
विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने



online Sanskrit books

कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते २९२
देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः २९३
दाषीकुम्भं बहिर्ग्रामान्निनयेरन्स्वबान्धवाः
पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् २९४
चरितव्रत आयाते निनयेरन्नवं घटम्
जुगुप्सेरन्न चाप्येनं सम्वसेयुश्च सर्वशः २९५
पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः
वासो गृहान्तके देयमन्नं वासः सरक्षणम् २९६
नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्
विशेषपतनीयानि स्त्रीमामेतान्यपि ध्रुवम् २९७
शरणागतबालस्त्रीहिंसकान्सम्वसेन्न तु
चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् २९८
घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम्
स दद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया २९९
विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम्

## रहस्यप्रायश्चित्तम्

अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ३००
त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम्
अन्तर्जले विशुध्येत दत्त्वा गां च पयस्विनाम् ३०१
लोमभ्यः स्वाहेत्यथ वा दिवसं मारुताशनः
जले स्थित्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ३०२
त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः
ब्राह्मणस्वर्णहारी तु रुद्रजापी जले स्थितः ३०३
सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः

गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी ३०४
प्राणायामशतं कार्यं सर्वपापापनुत्तये
उपपातकजातानामनादिष्टस्य चैव हि ३०५
ओंकाराभिष्टुतं सोमसलिलं पावनं पिबेत्
कृत्वा हि रेतोविरामूत्रप्राशनं तु द्विजोत्तमः ३०६
निशायां वा दिवा वापि यदज्ञानकृतं भवेत्
त्रैकाल्यसम्ध्याकरणात्तत्सर्वं विप्रणश्यति ३०७
शुक्रियारगयकजपो गायत्र्याश्च विशेषतः
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ३०८
यत्र यत्र च सम्कीर्णमात्मानं मन्यते द्विजः
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ३०९
वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियापरम्
न स्पृशन्तीह पापानि महापातकजान्यपि ३१०
वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्यदृक्
जप्त्वा सहस्रं गायत्र्याः शुध्येद्ब्रह्मवधादृते ३११
ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता
अहिंसा स्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ३१२
स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः
नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता ३१३
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्
जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरेत् ३१४
पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ३१५
पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ३१६
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्

एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः  ३१७
एकभक्तेन नक्तेन तथैवायाचितेन च
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः  ३१८
यथाकथम्चित्त्रिगुणः प्राजापत्योऽयमुच्यते
अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्न भोजनः  ३१९
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्
द्वादशाहोपवासेन पराकः परिकीर्तितः  ३२०
पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते  ३२१
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः  ३२२
तिथिवृद्ध्या चरेत्पिण्डान्शुक्ले शिख्यण्डसम्मितान्
एकैकं ह्रासयेत्कृष्ने पिण्डं चान्द्रायणं चरन् ३२३
यथाकथम्चित्पिण्डानां चत्वारिंशच्छतद्वयम्
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्  ३२४
कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा
पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेत्  ३२५
अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्  ३२६
कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात्
यथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः  ३२७
श्रुत्वैतानृषयो धर्मान्याज्ञवल्क्येन भाषितान्
इदमूचुर्महात्मानं योगीन्द्रममितौजसम्  ३२८
य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः
इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम्  ३२९
विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनं तथा

अायुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ३३०
श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति
पितॄणां तस्य तृप्तिः स्यादक्षय्या नात्र संशयः ३३१
ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत्
वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ३३२
य इदं श्रावयेद्विद्वान्द्विजान्पर्वसु पर्वसु
अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ३३३
श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम्
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ३३४

इति प्रायश्चित्ताध्याय

याज्ञवल्क्यस्मृतिः समाप्ता

Credits
Sources: Narayan Ram Acharya, *Yājñavalkya-Smṛti of Yogīśvara Yājñavalkya, with the Commentary Mitākṣarā of Vijnāneśvara, Notes, Variant Readings, etc.* Nirnayasagara Press, Bombay, 1949.
Typescript: Edited by Muneo Tokunaga, checked by Yasuke Ikari
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection

# लिखितस्मृतिः

## अथेष्टापूर्तकर्म वृषोत्सर्गफल गयापिण्डदान षोडश श्राद्धानि वर्णनम्

इष्टापूर्ते तु कर्तव्ये ब्राह्मणेन प्रयत्नतः
इष्टेन लभते स्वर्गं पूर्ते मोक्षमवाप्नुयात् १
एकाहमपि कर्तव्यं भूमिष्ठमुदकं शुभम्
कुलानि तारयेत्सप्त यत्र गौर्वितृषी भवेत् २
भूमिदानेन ये लोका गोदानेन च कीर्तिताः
ताँल्लोकान्प्राप्नुयान्मर्त्यः पादपानां प्ररोपणे ३
वापीकूपतडागानि देवतायतनानि च
पतितान्युद्धरेद्यस्तु स पूर्तफलमश्नुते ४
अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम्
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ५
इष्टापूर्ते द्विजातीनां सामान्यो धर्म उच्यते
अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके ६
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ७
देवतानां पितृणां च जले दद्याज्जलाञ्जलीन्
असंस्कृतमृतानां च स्थले दद्याज्जलाञ्जलिम् ८
एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः
मुच्यते प्रेतलोकात्तु पितृलोकं स गच्छति ९
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् १०
वाराणस्यां प्रविष्टस्तु कदाचिन्निष्क्रमेद्यदि
हसन्ति तस्य भूतानि अन्योन्यं करताडनैः ११
गयाशिरे तु यत्किंचिन्नाम्ना पिण्डं तु निर्वपेत्



online Sanskrit books

नरकस्था दिवं यान्ति स्वगस्था मोणमाप्नुयुः १२
आत्मनो वा परस्यापि गयाकूपे यतस्ततः
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् १३
लोहितो यस्तु वर्णेन शङ्खवर्णखुरः स्मृतः
लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः १४
नवश्राद्धं त्रिपक्षं च द्वादशैव तु मासिकम्
षण्मासौ चाऽऽब्दिकं चैव श्राद्धान्येतानि षोडश १५
यस्यैतानि न कुर्वीत एकोद्दिष्टानि षोडश
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि १६
सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं द्विजः
मातापित्रोः पृथक्कुर्यादेकोद्दिष्टं मृतेऽहनि १७
वर्षे वर्षे तु कर्तव्यं मात्रापित्रोस्तु संततम्
अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् १८
संक्रान्तावुपरागे च सर्वोत्सवमहालये
निर्वाप्यास्तु त्रयः पिण्डा एकतस्तु क्षयेऽहनि १९
एकोद्दिष्टं परित्यज्य पार्वणं कुरुते द्विजः
अकृतं तद्विजानीयात्स मातृपितृघातकः २०
अमावास्यां तु क्षयो यस्य प्रेतपक्षेऽथ वा यदि
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः २१
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते २२
यस्य संवत्सरादर्वाक्सपिण्डीकरणं स्मृतम्
प्रत्यहं तत्सोदकुम्भं दद्यात्संवत्सरं द्विजः
पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः २३
पितामह्याऽपि तत्तस्मिन्सत्येवं तु क्षयेऽहनि
तस्यां सत्यां प्रकर्तव्यं तस्याः श्वश्र्वेति निश्चितम् २४



online Sanskrit books

विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु
एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके २५
स्वगोत्राद्भ्रश्यते नारी उद्वाहात्सप्तमे पदे
भर्गृगोत्रेण कर्तव्यं दानं पिण्डोदकक्रियाः २६
द्विमातुः पिण्डदानं तु पिण्डे पिण्डे द्विनामतः
षण्णां देयास्त्रयः पिण्डा एवं दाता न मुह्यति २७
अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः
अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः २८
अग्नौकरणशेषं तु विश्वेदेवादि हूयते
अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् २९
यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ३०
अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे
रजते च सुवर्णे च नित्यं वसति पावकः ३१
यत्र यत्र प्रदातव्यं श्राद्धं कुर्वीत पार्वणम्
तत्र मातामहानां च कर्तव्यमुभयं सदा ३२
अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा
एभ्य एव प्रदातव्यमेकोद्दिष्टं न पार्वणम् ३३
यस्मिन्राशिगते सूर्ये विपत्तिः स्याद्द्विजन्मनः
तस्मिन्नहनि कर्तव्यं दानं पिण्डोदकक्रिया ३४
वर्षवृद्ध्याभिषेकादि कर्तव्यमधिके न तु
अधिमासे तु पूर्वं स्याच्छ्राद्धं संवत्सरादपि ३५
स एव हेयोद्दिष्टस्य येन केन तु कर्मणा
अभिघातान्तरं कार्यं तत्रैवाहः कृतं भवेत् ३६
शालाग्नौ पच्यते ह्यन्नं लौकिके वाथ संशयः
यस्मिन्नेव पचेदन्नं तस्मिन्होमो विधीयते ३७
वैदिके लौकिके वाऽपि नित्यं हुत्वा ह्यतन्द्रितः



online Sanskrit books

वैदिके स्वर्गमाप्नोति लौकिके हन्ति किल्विषम्  ३८

अन्नदानेनिषेधः

अग्नौ व्याहृतिभिः पूर्वं हुत्वा मन्त्रौस्तु शाकलैः
संविभागं तु भूतेभ्यस्ततोऽश्नीयादनग्निमान्  ३९
उच्छेषणं तु नोत्तिष्ठेद्यावद्विप्रविसर्जनम्
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः  ४०
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः
नैते निर्माल्यतां यान्ति नियोक्तव्याः पुनः पुनः  ४१
पानमाचमनं कुर्यात्कुशपाणिः सदा द्विजः
भुक्त्वाऽप्युच्छिष्टतां याति एष एव विधिः स्मृतः  ४२
पान आचमने चैव तर्पणे दैविके सदा
कुशहस्तो न दुष्येत यथा पाणिस्तथा कुशः  ४३
वामपाणौ कुशं कृत्वा दक्षिणेन उपस्पृशेत्
आचामन्ति च ये मूढा रुधिरेणाऽऽचमन्ति ते  ४४
नीवीमध्येषु ये दर्भा ब्रह्मसूत्रेषु ये कृताः
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः  ४५
पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम्
मूत्रोच्छिष्टपुरीषं च तेषां त्यागो विधीयते  ४६
दैवपूर्वं तु यच्छ्राद्धमदैवं चापि यद्भवेत्
ब्रह्मचारी भवेत्तत्र कुर्याच्छ्राद्धं तु पैतृकम्  ४७
मातुः श्राद्धं तु पूर्वं स्यात्पितृणां तदनन्तरम्
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्  ४८
क्रतुर्दक्षो वसुः सत्यः कालकामौ धुरिलोचनौ
पुरूरवार्द्रवाश्चैव विश्वेदेवाः प्रकीर्तिताः  ४९
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते  ५०

इष्टिश्राद्ध क्रतुर्दक्षो वसुः सभ्यश्च वैदिके
कालः कामोऽग्निकार्येषु काम्येषु धुरिलोचनौ ५१
पुरूरवार्द्रवश्चैव पार्वणेषु नियोजयेत् ५२
यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ५३
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ५४
मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ५५
मृण्मयेषु च पात्रेषु श्राद्धे यो भोजयेत्पितृन्
अन्नदाता पुरोधाश्च भोक्ता च नरकं व्रजेत् ५६
अलाभे मृण्मयं दद्यादनुज्ञातस्तु तैर्द्विजैः
घृतेन प्रोक्षणं कुर्यान्मृदः पात्रं पवित्रकम् ५७
श्राद्धं कृत्वा परश्राद्धे यस्तु भुञ्जीत विह्वलः
पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ५८
श्राद्धं दत्त्वा च भुक्त्वा च अध्वानं योऽधिगच्छति
भवन्ति पितरस्तस्य तन्मासं पांसुभोजनाः ५९
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्
दानं प्रतिग्रहं होमं श्राद्धभुक्त्वाष्ट वर्जयेत् ६०

भुञ्जानस्य वर्णनम्

अध्वगामी भवेदश्वः पुनर्भोक्ता च वायसः
कर्मकृज्जायते दासः स्त्रीसङ्गेन च सूकरः ६१
दशकृत्वः पिबेदापः सावित्र्या चाभिमन्त्रिताः
ततः संध्यामुपासीत शुध्येत तदनन्तरम् ६२
आर्द्रवासास्तु यत्कुर्याद्बहिर्जानु च यत्कृतम्
तत्सर्वं निष्फलं कुर्याज्जपहोमप्रतिग्रहम् ६३

चान्द्रायणं नवश्राद्धे पराको मासिके तथा
पक्षत्रये तु कृच्छ्रं स्यात्षण्मासे कृच्छ्रमेव च ६४
ऊनाब्दिके त्रिरात्रं स्यादेकाहः पुनराब्दिके
शावे मासस्तु भुक्त्वा वा पादकृच्छ्रो विधीयते ६५
सर्पविप्रहतानां च शृङ्गिदंष्ट्रिसरीसृपैः
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् ६६
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम्
तं स्पर्शयन्ति ये विप्रा गोजाश्वाश्च भवन्ति ते ६७
अग्निदाता तथा चान्ये पाशच्छेदकराश्च ये
तप्तकृच्छ्रेण शुध्यन्ति मनुराह प्रजापतिः ६८
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं पयः पिबेत्
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ६९
गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ७०
उद्यताः सह धावन्ते सर्वे ये शस्त्रपाणयः
यद्यकोऽपि हनेत्तत्र सर्वे तु ब्रह्मघातकाः ७१
बहूनां शस्त्रघातानां यद्येको मर्मघातकः
सर्वे तु शुद्धिमिच्छन्ति स एको ब्रह्मघातकः ७२
पतितान्नं यदा भुङ्क्ते भुङ्क्ते चाण्डालवेश्मनि
स मासार्द्धं चरेद्वारि मासं कामकृतेन तु ७५
यो येन पतितेनैव संसर्गं याति मानवः
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ७४
ब्रह्महा पातकिस्पर्शे स्नानं येन विधीयते
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ७५
ब्रह्महा च सुरापायी तथैव गुरुतल्पगः
महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ७६



online Sanskrit books

स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा
कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ७७
उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणस्तु कदाचन
तत्क्षणात्कुरुते स्नानमाचमेन शुचिर्भवेत् ७८
कुब्जवामनषण्डेषु गद्गदेषु जडेषु च
जात्यन्धे बधिरे मूके न दोषः परिवेदने ७९
क्लीबे देशान्तरस्थे पतिते प्रव्रजितेऽपि वा
योगशास्त्राभियुक्ते च न दोषः परिवेदने ८०
पूरणे कूपवापीनां वृक्षच्छेदनपातने
विक्रीणीते अपि ह्यश्वं गोवधं तस्य निर्दिशेत् ८१
पादेऽङ्गरोमवपनं द्विपादे श्मश्रु केवलम्
तृतीये तु शिखावर्जं शिखाछेदश्चतुर्थके ८२
चण्डालोदकसंस्पर्शे स्नानं येन विधीयते
तनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ८३
चण्डालघटभाण्डस्थं यत्तोयं पिबते द्विजः
तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् ८४
यदि न क्षिपते तोयं शरीरे तस्य जीर्यति
प्राजापत्यं न दातव्यं कृच्छ्रं सांतपनं चरेत् ८५
चरेत्सांतपनं विप्रः प्राजापत्यं तु क्षत्रियः
तदर्धं तु चरेद्वैश्यः पादं शूद्रे तु दापयेत् ८६
रजस्वला यदा स्पृष्टा श्वानसूकरवायसैः
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ८७
आजानुतः स्नानमात्रमानाभेस्तु विशेषतः
अत ऊर्ध्वं त्रिरात्रं स्यान्मदिरास्पर्शने मतम् ८८
बालश्चैव दशाहे तु पञ्चत्वं यदि गच्छति
सद्य एव विशुध्येत नाशौचं नोदकक्रिया ८९

शावसूतक उत्पन्ने सूतकं तु यदा भवेत्
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी ९०
षष्ठेन शुध्येतैकाहं पञ्चमे त्वहमेव तु
चतुर्थे सप्तरात्रं स्यात्त्रिपुरुषं दशमेऽहनि ९१
मरणारब्धमाशौचं संयोगो यस्य नाग्निभिः
आदाहात्तस्य विज्ञेयं यस्य वैतानिको विधिः ९२
आममासं घृतं क्षौद्रं स्नेहाश्च फलसंभवाः
अन्त्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः ९३
मार्जनीरजमेष षाण्डं स्नानवस्त्रघटोदकम्
नवाम्भसि तथा चैव हन्ति पुण्यं दिवाकृतम् ९४
दिवा कपित्थच्छायायां रात्रौ दधिशमीषु च
धात्रीफलेषु सर्वत्र अलक्ष्मीर्वसते सदा ९५
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः
तत्र तत्र तिलैर्होमो गायत्र्यष्टशतं जपेत् ९६

इति लिखितर्षिप्रोक्तं धर्मशास्त्रं समाप्तम्

समाप्तेयं लिखितस्मृतिः

Reference:
*Smṛti Sandarbha*, Vol. III, (Delhi: Nag, 1981) p. 1455.

# अथ सम्वर्त्तस्मृतिः

## अथादौ ब्रह्मचर्यवर्णनम्

श्रीगणेशाय नमः

सम्वर्त्तमेकमासीनमात्मविद्यापरायणम्
ऋषयस्तु समागम्य पप्रच्छुर्धर्मकाङ्क्षिणः १
भगवन् श्रोतुमिच्छामः श्रेयस्कर्म द्विजोत्तम
यथावद्धर्ममाचक्ष्व शुभाशुभविवेचनम् २
वामदेवादयः सर्वे तमपृच्छन् महौजसम्
तानब्रवीन्मुनीन् सर्वान् प्रीतात्मा श्रूयतामिति ३
स्वभावाद्यत्र विचरेत् कृष्णसारः सदा मृगः
धर्म्यदेशः स विज्ञेयो द्विजानां धर्मसाधनम् ४
उपनीतः सदा विप्रो गुरोस्तु हितमाचरेत्
स्रग्गन्धमधुमांसानि ब्रह्मचारी विवर्जयेत् ५
सन्ध्यां प्रातः सनक्षत्रामुपासीत यथाविधि
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्करे ६
तिष्ठन् पूर्वां जपं कुर्य्याद्ब्रह्मचारी समाहितः
आसीनः पश्चिमां सन्ध्यां जपं कुर्य्यादतन्द्रितः ७
अग्निकार्य्यं ततः कुर्यान्मेधावी तदनन्तरम्
ततोऽधीयीत वेदन्तु वीक्षमाणो गुरोर्मुखम् ८
प्रणवं प्राक्प्रयुञ्जीत व्याहृतिस्तदनन्तरम्
गायत्रीञ्चानुपूर्वेण ततो वेदं समारभेत् ९
हस्तौ सुसंयतौ कार्य्यौ जानुभ्यामुपरिस्थितौ
गुरोरनुमतं कुर्य्यात् पठन्नान्यमतिर्भवेत् १०
सायं प्रातस्तु भिक्षेत ब्रह्मचारी सदा व्रती
निवेद्य गुरवेऽश्नीयात् प्राङ्मुखो वाग्यतः शुचि ११
सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्

नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः १२
आचम्यैव तु भुञ्जीत भुक्त्वा चोपस्पृशेद्द्विजः
अनाचान्तस्तु योऽश्नीयात्प्रायश्चित्तीयते तु सः १३
अनाचान्तः पिवेद्यस्तु योऽपि वा भक्षयेद्द्विजः
गायत्र्यष्टसहस्रन्तु जपं कृत्वा विशुध्यति १४
अकृत्वा पादशौचन्तु तिष्ठन् मुक्तशिखोऽपि वा
विना यज्ञोपवीतेन आचान्तोऽथ शुचिर्द्विजः १५
आचामेद् ब्राह्मतीर्थेन सोपवीती ह्युदङ्मुखः
उपवीती द्विजो नित्यं प्राङ्मुखो वाग्यतः शुचिः १६
जले जलस्थ आचामेत्स्थलाचान्तो बहिः शुचिः
बहिरन्तस्थ आचान्त एवं शुद्धिमवाप्नुयात् १७
आमणिबन्धनाद्धस्तौ पादावद्भिर्विशोधयेत्
अशब्दाभिरनुष्णाभिः स्ववर्णरसगन्धिभिः १८
हृद्गताभिरफेनाभिस्त्रिश्चतुर्वाद्भिराचमेत्
परिमृज्य द्विरास्यन्तु द्वादशाङ्गानि च स्पृशेत् १९
स्नात्वा पीत्वा तथा भुक्त्वा स्पृष्ट्वा चैव द्विजोत्तमाः
अनेन विधिना विप्र आचान्तः शुचितामियात् २०
शूद्रः शुद्ध्यति हस्तेन वैश्यो दन्तेषु वारिभिः
कण्ठागतैः क्षत्रियस्तु आचान्तः शुचिता मियात् २१
आसनारूढपादश्च कृतावशक्थिकस्तथा
आरूढपादको वापि न शुद्ध्यति कदाचन २२
उपासीत न चेत्सन्ध्यामग्निकार्य्यं न वा कृतम्
गायत्र्यष्टसहस्रन्तु जपेत्स्नात्वा समाहितः २३
सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च
ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुध्यति २४
ब्रह्मचारी तु यो गच्छेत् स्त्रियं कामप्रपीडितः

प्राजापत्यं चरेत् कृच्छ्रमथवैकं सुमन्त्रितः २५
ब्रह्मचारी तु योऽश्नीयान्मधुमांसं कथञ्चन
प्राजापत्यन्तु कृत्वासौ मौञ्जीहोमेन शुध्यति २६
निर्वपेच्च पूरोडाशं ब्रह्मचारी च पर्वणि
मन्त्रैः शाकलहोमान्सैरग्नावाज्यञ्च होमयेत् २७
ब्रह्मचारी तु यः स्कन्देत्कामतः शुक्रमात्मनः
अवकीर्णी व्रतं कुर्य्यात् स्नात्वा शुद्ध्येदकामतः २८
भिक्षाटनमतः कृत्वा स्वस्थो ह्येकात्मनः श्रुतिः
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् २९
शूद्रहस्तेन योऽश्नीयात् पानीयं वा पिवेत्क्वचित्
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ३०
शुष्कपर्य्युषितोच्छिष्टं भुक्त्वान्नं केशदूषितम्
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ३१
शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ३२
दिवा स्वपिति यः स्वस्थो ब्रह्मचारी कथञ्चन
स्नात्वा सूर्य्यं समभ्यर्च्च्य गायत्र्यष्टशतं जपेत् ३३
एष धर्मः समाख्यातः प्रथमाश्रमवासिनाम्
एवं संवर्त्तमानस्तु प्राप्नोति परमां गतिम् ३४
अथ द्विजोऽभ्यनुज्ञातः सवर्णां स्त्रियमुद्वहेत्
कुले महति सम्भूता लक्षणैश्च समन्विताम्
ब्राह्मेणैव विवाहेन शीलरूपगुणान्विताम् ३५
पञ्चयज्ञ विधानञ्च कुर्य्यादहरहर्द्विजः
न हापयेत्क्वचिद्विप्रः श्रेयस्कामः कदाचन ३६
हानिं तस्य तु कुर्व्वीत सदा मरणजन्मनोः ३७
विप्रो दशाहमासीत दानाध्ययनवर्जितः

क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशैव तु
शूद्रः शुध्यति मासेन सम्वर्त्त वचनं यथा ३८
प्रेतस्य तु जलं देयं स्नात्वा च गोत्रजैर्बहिः
प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ३९
चतुर्थे सञ्चयं कुर्य्यात् सर्वैस्तु गोत्रजैः सह
ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते ४०
चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य च
अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः ४१
जातस्यापि विधिर्दृष्ट एष एव मनीषिभिः
दशरात्रेण शुध्यन्ति वैश्यदेवविवर्ज्जिताः ४२
पुत्रे जाते पितुः स्नानं सचैलन्तु विधीयते
माता शुध्येद्दशाहेन स्नातस्य स्पर्शनं पितुः ४३
होमस्तत्र तु कर्त्तव्यः शुष्कान्नेन फलेन च
पञ्चयज्ञविधानन्तु न कार्य्यं मृत्युजन्मनोः ४४
दशाहात्तु परं सम्यग्विप्रोऽधीयीत धर्मवित्
दानञ्च विधिना देयमशुभान्तकरं शुभम् ४५
यद्यदिष्टतमं लोके यच्चापि दयितं गृहे
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ४६
नानाविधानि द्रव्याणि धान्याति सुबहूनि च
समुद्रजानि रत्नानि नरो विगतकल्मषः
दत्त्वा विप्राय महते प्राप्नोति महतीं श्रियम् ४७
गन्धमाभरणं माल्यं यः प्रयच्छति धर्मवित्
स सुगन्धः सदा हृष्टो यत्र तत्रोपजायते ४८
श्रोत्रियाय कुलीनाय त्वर्थिने च विशेषतः
यद्दानं दीयते भक्त्या तद्भवेत्तु महत्फलम् ४९
आहूय शीलसम्पन्नं श्रुतेनाभिजनेन च



online Sanskrit books

शुचिर्विप्रं महाप्राज्ञो हव्यकव्येषु पूजयेत्  ५०
नानाविधानि द्रव्याणि रसवन्तीप्सितानि च
श्रेयस्कामेन देयानि स्वर्गमक्षयमिच्छता  ५१
वस्त्रदाता सुवेशः स्याद्रौप्यदो रूपमेव हि
हिरण्यदो महच्चायुर्लभेत्तेजश्च मानवः  ५२
भूताभयप्रदानेन सर्वकामानवाप्नुयात्
दीर्घमायुश्च लभते सुखी चैव तथा भवेत्  ५३
धान्योदकप्रदायी च सर्पिर्दः सुखमश्नुते
अलङ्कृत्य त्वलङ्कारं दत्त्वा प्राप्नोति तत्फलम्  ५४
फलमूलानि विप्राय शाकानि विविधानि च
सुरभीणि च पुष्पाणि दत्त्वा प्राज्ञश्च जायते  ५५
ताम्बूलं चैव यो दद्याद्ब्राह्मणेभ्यो विचक्षणः
मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते  ५६
पादुकोपानहौ च्छत्रं शयनान्यासनानि च
विविधानि च यानानि दत्त्वा दिव्यगतिर्भवेत्  ५७
दद्याच्च शिशिरे त्वग्निं बहुकाष्ठं प्रयत्नतः
कायाग्निदीप्तिं प्राज्ञत्वं रूपसौभाग्यमाप्नुयात्  ५८
औषधं स्नेहमाहारं रोगिणां रोगशान्तये
दत्त्वा स्याद्रोगरहितः सुखी दीर्घायुरेव च  ५९
इन्धनानि च यो दद्याद्विप्रेभ्यः शिशिरागमे
नित्यं जयति संग्रामे श्रिया युक्तस्तु दीप्यते  ६०
अलङ्कृत्य तु यः कन्यां वराय सदृशाय वै
ब्राह्मीयेण विवाहेन दद्यात्तान्तु सुपूजिताम्  ६१
स कन्यायाः प्रदानेन श्रेयो विन्दति पुष्कलम्
साधुवादं लभेत् सद्भिः कीर्तिं प्राप्नोति पुष्कलाम्  ६२
ज्योतिष्टोमादिसत्त्राणां शतं शतगुणीकृतम्



online Sanskrit books

प्राप्नोति पुरुषो दत्त्वा होममन्त्रैस्तु संस्कृताम्  ६३
अलङ्कृत्य पिता कन्यां भूषणाच्छादनासनैः
दत्त्वा स्वर्गमवाप्नोति पूजितस्तु सुरादिषु  ६४
रोमदर्शनसंप्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम्
रजोदृष्ट्वा तु गन्धर्वः कुचौ दृष्ट्वा तु पावकः  ६५
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी
दशवर्षा भवेत् कन्या अत ऊर्द्ध्वं रजस्वला  ६६
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्  ६७
तस्माद्विवाहयेत् कन्यां यावन्नर्त्तुमती भवेत्
विवाहोऽष्टमवर्षायाः कन्यास्तु प्रशस्यते  ६८
तैलमास्तरणं प्राज्ञः पादाभ्यङ्गं ददाति यः
प्रहृष्टमानसो लोके सुखी चैव सदा भवेत्  ६९
अनड्वाहौ च यो दद्यात्कीलसीरेण संयुतौ
अलङ्कृत्य यथाशक्त्या धूर्व्वहौ शुभलक्षणौ  ७०
सर्वपापविशुद्धात्मा सर्वकामसमन्वितः
वर्षाणि वसति स्वर्गे रोमसंख्याप्रमाणतः  ७१
धेनुश्च यो द्विजे दद्यादलङ्कृत्य पयस्विनीम्
कांस्यवस्त्रादिभिर्युक्तां स्वर्गलोके महीयते  ७२
भूमिं शस्यवतीं श्रेष्ठां ब्राह्मणे वेदपारगे
गां दत्वार्द्धप्रसूताञ्च स्वर्गलोके महीयते  ७३
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गाञ्च महीञ्च दद्यात्  ७४
यावन्ति शस्यमूल्यानि आरोप्याणि च सर्वशः
नरस्तावन्ति वर्षाणि स्वर्गलोके महीयते  ७५
सर्वेषामेव दानानामेकजन्मानुगं फलम्

हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ७६
यो ददाति स्वर्णरौप्यैर्हेमशृङ्गीमरोगिणीम्
सवत्सां वाससा वीतां सुशीलाङ्गां पयस्विनीम् ७७
तस्यां यावन्ति रोमाणि सवत्सायां दिवं गतः
तावद्वर्षसहस्राणि स नरो ब्रह्मणोऽन्तिके ७८
यो ददाति वलीवर्द्दमुक्तेन विधिना शुभम्
अव्यङ्गं गोप्रदानेन फलाद्दशगुणं फलम् ७९
जलदस्तृप्तिमतुलां वितृष्य सर्ववस्तुषु
अन्नदः सुखमाप्नोति सुतृप्तः सर्ववस्तुषु ८०
सर्वेषामेव दानानामन्नदानं परं स्मृतम्
सर्वेषामेव जन्तूनां यतस्तज्जीवितं फलम् ८१
यस्मादन्नात्प्रजाः सर्व्वाः कल्पे कल्पेऽसृजत्प्रभुः
तस्मादन्नात्परं दानं न भूतो न भविष्यति ८२
अन्नदानात्परं दानं विद्यते न हि किञ्चन
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ८३
मृत्तिकां गोशकृद्दर्भानुपवीतं यथोत्तरम्
दत्त्वा गुणाग्र्यविप्राय कुले महति जायते ८४
मुखवासञ्च यो दद्याद्दन्तधावनमेव च
शुचिगन्धसमायुक्तो वाक्पटुः स सदा भवेत् ८५
पादशौचन्तु यो दद्यात्तथा च गुदलिङ्गयोः
यः प्रयच्छति विप्राय शुद्धबुद्धिः सदा भवेत् ८६
औषधं पथ्यमाहारं स्नेहाभ्यङ्गं प्रतिश्रयम्
यः प्रयच्छति रोगिभ्यः सर्वव्याधि विवर्जितः ८७
गुडमिक्षुरसञ्चैव लवणं व्यञ्जनानि च
सुरभीणि च पानानि दत्त्वात्यन्तसुखी भवेत् ८८
दानैश्च विविधैः सम्यक् पुण्यमेतदुदाहृतम्

विद्यादानेन पुरायेन ब्रह्मलोके महीयते ८९
अन्योन्यान्नप्रदा विप्रा अन्योन्यप्रतिपूजकाः
अन्योन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च ९०
दानान्येतानि देयानि ह्यन्यानि च विशेषतः
दीनान्धकृपणादिभ्यः श्रेयस्कामेन धीमता ९१
ब्रह्मचारियतिभ्यश्च वपनं यस्तु कारयेत्
नखकर्मादिकञ्चैव चक्षुष्मान् जायते नरः ९२
देवागारे द्विजातीनां दीपं दद्याच्चतुष्पथे
मेधाविज्ञानसम्पन्नश्चक्षुष्मान् जायते नरः ९३
नित्ये नैमित्तिके काम्ये तिलान् दत्वा तु शक्तितः
प्रजावान् पशुमांश्चैव धनवान् जायते नरः ९४
यो ददात्यर्थितोविप्रे यत्तत् संप्रतिपादिते
तृणकाष्ठादिकञ्चैव गोप्रदानसमं भवेत् ९५
कृत्वा गार्ह्याणि कर्माणि स्वभर्य्यापोषणे नरः
ऋतुकालाभिगामी स्यात्प्राप्नोति परमां गतिम् ९६
उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम्
बलीपलितसंयुक्तस्तृतीयन्तु समाश्रयेत् ९७
गच्छेदेवं वनं प्राज्ञः स्वभार्य्यां सहचारिणीम्
गृहीत्वा चाग्निहोत्रञ्च होमं तत्र न हापयेत् ९८
कुर्य्याच्चैव पुरोडाशं वन्यैर्मेध्यैर्यथाविधि
भिक्षाञ्च भिक्षवे दद्याच्छाकमूलफलानि च ९९
कुर्य्यादध्ययनं नित्यमग्निहोत्र परायणः
इष्टिं पार्व्वायणीयाञ्च प्रकुर्य्यात्प्रतिपर्वसु १००
उषित्वैवं वने सम्यग्विधिज्ञः सर्ववस्तुषु
चतुर्थमाश्रमं गच्छेद्धुतहोमोजितेन्द्रियः १०१
अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्

वेदाभ्यासरतो नित्यमात्मविद्यापरायणः १०२
अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा
अद्भिः प्रक्षाल्य तत्सर्व्वं भुञ्जीत च समाहितः १०३
अरण्ये निर्ज्जने विप्रः पुनरासीत भुक्तवान्
एकाकी चिन्तयेन्नित्यं मनोवाक्कायसंयतः १०४
मृत्युञ्च नाभिनन्देत जीवितं वा कथञ्चन
कालमेव प्रतीक्षेत यावद्वायुः समाप्यते १०५
संसेव्य चाश्रमान् विप्रो जितक्रोधोजितेन्द्रियः
ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्द्विजः १०६
आश्रमेषु च सर्वेषु ह्युक्तः प्रासङ्गिकोविधिः
अथाभिवक्ष्ये पापानां प्रायश्चित्तं यथाविधि १०७
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः
महापातकिनस्त्वेते तत्संयोगी च पञ्चमः १०८
ब्राह्मघ्नस्तु वनं गच्चेत् कल्कवासाजटी ध्वजी
वन्यान्येव फलान्यश्नन् सर्व्व कामविवर्जितः १०९
भिक्षार्थी च चरेद्ग्रामं वन्यैर्यदि न जीवति
चातुर्वर्ण्यं चरेद्भैक्षं खट्वाङ्गी संयतः पुमान् ११०
भैक्षञ्चैव समादाय वनं गच्छेत्ततः पुनः
वनवासी सपापश्च सदाकालमतन्द्रितः १११
ख्यापयन्नेव तत्पापं ब्रह्मघ्नः पापकृन्नरः
अनेन तु विधानेन द्वादशाब्दव्रतञ्चरेत् ११२
संनियम्येन्द्रियग्रामं सर्वभूतहिते रतः
ब्रह्महत्यापनोदाय ततो मुच्येत किल्विषात् ११३
अतः परं सुरापस्य प्रवक्ष्यामि विनिष्कृतिम्
श्रोतुमिच्छथ भो विप्रा वेदशास्त्रानुरूपिकाम् ११४
गौडी पैष्टी तथा साध्वी विज्ञेया त्रिविधा सुरा

यथैवैका तथा सर्वा न पातव्या द्विजैः सदा  ११५
सुरापस्तु सुरां तप्तां पिबेत्तत्पापमोक्षकः
गोमूत्रमग्निवर्णञ्च गोमयं वा तथा विधम्  ११६
घृतञ्चैव सुतातञ्च क्षीरं वापि तथाविधम्
वत्सरं वा कणानश्नन् सर्वकामविवर्जितः  ११७
चान्द्रायणानि वा त्रीणि सुरापी व्रतमाचरेत्
मुच्यते तेन पापेन प्रायश्चित्ते कृते सति  ११८
एवं शुद्धिः सुरापस्य भवेदिति न संशयः
मद्यभाण्डोदकं पीत्वा पुनः संस्कारमर्हति  ११९
स्तेयं कृत्वा सुवर्णस्य राज्ञे शंसेत मानवः
ततो मुषलमादाय स्तेनं हन्यात्ततो नृपः  १२०
यदि जीवति स स्तेनस्ततस्तेयात् प्रमुच्यते
अरण्ये चीरवासा वा चरेद्ब्रह्महणो व्रतम्  १२१
समालिङ्गेत्स्त्रियं वापि दीप्तां कृत्वायसा कृताम्
एवं शुद्धिः कृता स्तेये साम्वर्त्तवचनं यथा  १२२
गुरुतल्पे शयानस्तु तल्पे स्वप्यादयोमये
चान्द्रायणानि वा कुर्य्याच्चत्वारि त्रीणि वा द्विजः
ततो विमुच्यते पापात्प्रायश्चित्ते कृते सति  १२३
एभिः सम्पर्कमायाति यः कश्चित्पापमोहितः
षण्मासादधिकं वापि पूर्वोक्तव्रतमाचरेत्  १२४
महापातकिसंयोगे ब्रह्महत्यादिभिर्नरः
तत्पापस्य विशुद्ध्यर्थं तस्य तस्य व्रतञ्चरेत्  १२५
क्षत्रियस्य बधं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति
कुर्य्याच्चैवानुरूपेण त्रीणि कृच्छ्राणि संयतः  १२६
वैश्यहत्यान्तु संप्राप्तः कथञ्चित्काममोहितः
कृच्छ्रातिकृच्छ्रं कुर्व्वीत स नरो वैश्यघातकः  १२७



online Sanskrit books

कुर्य्याच्छूद्रवधं प्राप्तस्तप्तकृच्छ्रं यथाविधि १२८
गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं तत्त्वतः पुमान्
गोघ्नः कुर्व्वीत संस्थानं गोष्ठे गोरूपसंस्थिते १२९
तत्रैव क्षितिशायी स्यान्मासार्द्धं संयतेन्द्रियः
शक्तुयावकपिण्याकपयोदधि सकृन्नरः १३०
एतानि क्रमतोऽश्नीयाद्द्विजस्तु पापमोक्षकः
शुद्ध्यते सार्द्धमासेन नखलोमविवर्ज्जितः १३१
स्नानं त्रिषवणं चास्य गवामनुगमस्तथा
एतत्समाहितः कुर्य्यान्नरोविगतमत्सरः १३२
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः
ततश्चीर्णव्रतः कुर्य्याद्विप्राणां भोजनं परम् १३३
भुक्तवत्सु च विप्रेषु गाञ्च दद्यात् सदक्षिणाम् १३४
व्यापादितेषु बहुषु बन्धने रोधनेऽपिवा
द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विशुद्धये १३५
एका चेद्बहुभिः कैश्चिद्दैवाद्व्यापादिता क्वचित्
पादं पादन्तु हत्यायाश्चरेयुस्ते पृथक् पृथक् १३६
यन्त्रणे गोचिकित्सार्थे मूढगर्भविसोचने
यदि तत्र विपत्तिः स्यान्न स पापेन लिप्यते १३७
निशाबन्धनिरूप्येषु सर्पव्याघ्रहतेषु च
अग्निविघ्ननिपातेन प्रायश्चित्तं न विद्यते १३८
प्रायश्चित्तस्य पादन्तु रोधेषु व्रतमाचरेत्
द्वौ पादौ बन्धने चैव पादोनं कुट्टने तथा १३९
पाषाणैर्लगुडैर्दण्डैस्तथा शस्त्रादिभिर्नरः
निपातने चरेत्सर्वं प्रायश्चित्तं विशुद्धये १४०
गजञ्च तुरगं हत्वा महिषोष्ट्रकपिन्तथा
एषु कुर्व्वीत सर्वेषु सप्तरात्रमभोजनम् १४१

व्याघ्रं श्वानं तथा सिंहमृत्तं शूकरमेव च
एतान् हत्वा द्विजः कृच्छ्रं ब्राह्मणानाञ्च भोजनम् १४२
सर्वासामेव जातीनां मृगाणां वनचारिणाम्
त्रिरात्रोपोषितस्तिष्ठेज्जपन्वै जातवेदसम् १४३
हंसं काकं बलाकञ्च पारावतमथापि वा
सारसञ्चासभासञ्च हत्वा त्रिदिवसं त्तिपेत् १४४
चक्रवाकं तथा क्रौञ्चं सारिकाशुकतित्तिरिम्
श्येनगृध्राबुलूकञ्च कपोतकमथापि वा १४५
टिट्टिभं जालपादञ्च कोकिलं कुक्कुटं तथा
एवं पत्तिषु सर्वेषु दिनमेकमभोजनम् १४६
मण्डूकञ्चैव हत्वा च सर्पमार्ज्जारमूषिकम्
त्रिरात्रोपोषितस्तिष्ठेत्कुर्य्याद्ब्राह्मणभोजनम् १४७
अनस्थीन्ब्राह्मणो हत्वा प्राणायामेन शुध्यति
अस्थिमतो बधे विप्रः किञ्चिद्दद्याद्विचत्तणः १४८
चाण्डालीं यो द्विजो गच्छेत्कथञ्चित्काममोहितः
त्रिभिः कृच्छ्रैर्विशुद्ध्येत प्राजापत्यानुपूर्वकैः १४९
पुक्कसीगमनं कृत्वा कामतोऽकामतोऽपि वा
कृच्छ्रं चान्द्रायणं तस्य पावनं परमं स्मृतम् १५०
नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम्
गत्वा चान्द्रायणं कुर्य्यात्तथा चर्मोपजीविनीम् १५१
त्तत्रियामथ वैश्यां वा गच्छेद्यः काममोहितः
तस्य सान्तपनं कृच्छ्रं भवेत्पापापनोदकम् १५२
शूद्रीं तु ब्राह्मणो गत्वा मासं मासार्द्धमेव वा
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति १५३
विप्रस्तु ब्राह्मणीं गत्वा प्राजापत्यं समाचरेत्
त्तत्रियां त्तत्रियोगत्वा तदेव व्रतमाचरेत् १५४



online Sanskrit books

नरोगो गमनं कृत्वा कुर्य्याच्चान्द्रायणं व्रतम्  १५५
गुरोर्दुहितरं गत्वा स्वसारं पितुरेव च
तस्या दुहितरञ्चैव चरेच्चान्द्रायणं व्रतम्  १५६
मातुलानीं सनाभिञ्च मातुलस्यात्मजां स्नुषाम्
एता गत्वा स्त्रियो मोहात्पराकेण विशुध्यति  १५७
पितृव्यदारगमने भ्रातृभार्य्यागमे तथा
गुरुतल्पव्रतं कुर्य्यात्तस्यान्या निष्कृतिर्न च  १५८
पितृदाराः समारुह्य मातृवर्जं नराधमः
भगिनीं मातुलसुतां स्वसारं चान्यमातृजाम्
एतास्तिस्त्रः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेत्  १५९
मातरं योऽधिगच्छेच्च सुतां वा पुरुषाधमः
भगिनीञ्च निजां गत्वा निष्कृतिर्नो विधीयते  १६०
कुमारीगमने चैव व्रतमेतत्समादिशेत्
पशुवेश्याभिगमने प्राजापत्यं विधीयते  १६१
सखिभार्य्यां कुमारीञ्च श्वश्रूं वा श्यालिकां तथा
नियमस्थां व्रतस्थाञ्च योऽभिगच्छेत्स्त्रियं द्विजः
स कुर्य्यात्प्राकृतं कृच्छ्रं धेनुं दद्यात्पयस्विनीम्  १६२
रजस्वलाञ्च योगच्छेद्गर्भिणीं पतितां तथा
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विधीयते  १६३
वेश्याञ्च ब्राह्मणो गत्वा कृच्छ्रमेकं समाचरेत्
एवं शुद्धिः समाख्याता सम्वर्त्तस्य वचो यथा  १६४
ब्राह्मणो ब्राह्मणीं गत्वा कृच्छ्रेणैकेण शुध्यति  १६५
कथञ्चिद्ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च
गोमूत्रयावकाहारी मासेनैकेन शुध्यति  १६६
ब्राह्मणी शूद्रसम्पर्के कथञ्चित्समुपागते
कृच्छ्रं चान्द्रायणं कुर्य्यात्पावनं परमं स्मृतम्  १६७



online Sanskrit books

चाराडालं पुक्कशञ्चैव श्वपाकं पतितं तथा
एतान् श्रेष्ठस्त्रियो गत्वा कुर्य्युश्चान्द्रायणत्रयम्  १६८
अतःपरञ्च दुष्टानां निष्कृतिं श्रोतुमर्हथ
सन्नयस्य दुर्म्मतिः कश्चिदपत्यार्थं स्त्रियं व्रजेत्
स कुर्य्यात्कृच्छ्रमश्रान्तः षरामासन्तदनन्तरम्  १६९
विषाग्निश्यामशवलास्तेषामेवं विनिर्द्दिशेत्
स्त्रीणाञ्च तथाचरणे गर्ह्याभिगमनेषु च
पतनेषु तथैतेषु प्रायश्चित्तविधिः स्मृतः  १७०
नृणां विप्रतिपत्तौ च पावनः प्रेतराडिह  १७१
गोभिर्विप्रहते चैव तथाचैवात्मघातिनि
नाश्रुप्रपातनं कार्य्यं सद्भिः श्रेयोऽनुकाङ्क्षिभिः  १७२
एषामन्यतमं प्रेतं यो वहेत्तदहेतवे
तथोदकक्रियां कृत्वा चरेच्चान्द्रायणव्रतम्  १७३
तच्छवं केवलं स्पृष्ट्वा वस्त्रं वा केवलं यदि
पूर्वः कृच्छ्रापहारी स्यादेकाहक्षपणं तथा  १७४
महापातकिनाञ्चैव तथा चैवात्मघातिनाम्
उदकं पिराडदानञ्च श्राद्धं चैव तु यत्कृतम्
नोपतिष्ठति तत्सर्वं राक्षसैर्विप्रलुप्यते  १७५
चाराडालैस्तु हता ये च जलदंष्ट्रिसरीसृपैः
श्राद्धमेषां न कर्त्तव्यं ब्रह्मदराडहताश्च ये  १७६
कृत्वा मूत्रं पुरीषं वा भुक्तोच्छिष्टस्तथा द्विजः
श्वादि स्पृष्टो जपेद्देव्याः सहस्रं स्नानपूर्वकम्  १७७
चाराडालं पतितं स्पृष्ट्वा शवमन्त्यजमेव च
उदक्यां सूतिकां नारीं सवासाः स्नानमाचरेत्  १७८
अस्पृश्यं संस्पृशेद्यस्तु स्नानं तेन विधीयते
ऊर्द्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा  १७९



online Sanskrit books

चाण्डालाद्यैस्तु संस्पृष्ट उच्छिष्टश्च द्विजोत्तमः
गोमूत्रयावकाहारः षड्रात्रेण विशुध्यति १८०
शुना पुष्पवती स्पृष्टा पुष्पवत्यान्यया तथा
शेषान्यहन्युपवसेत्स्नाता शुध्येद्घृताशनात् १८१
चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम्
गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति १८२
अन्त्यजैः स्वीकृते तीर्थे तडागेषु नदीषु च
शुध्यते पञ्चगव्येन पीत्वा तोयमकामतः १८३
सुराघटप्रपातोयं पीत्वाकाशजलं तथा
अहोरात्रोषितो भूत्वा पञ्चगव्यं पिबेद्द्विजः १८४
कूपे विण्मूत्रसंस्पृष्टे प्राश्य चापो द्विजातयः
त्रिरात्रेणैव शुध्यन्ति कुम्भे शान्तपनं स्मृतम् १८५
वापीकूपतडागानां दूषितानां विशोधनम्
अपां घटशतोद्धारः पञ्चगव्यञ्च निक्षिपेत् १८६
आविकैकशफोष्ट्रीणां क्षीरं प्राश्य द्विजोत्तमः
तस्य शुद्धिविधानाय त्रिरात्रं यावकं पिवेत् १८७
स्त्रीक्षीरमाजिकं पीत्वा सन्धिन्याश्चैव गोः पयः
तस्य शुद्धिस्त्रिरात्रेण विड्भक्ष्याणाञ्च भक्षणे १८८
विण्मूत्रभक्षणे चैव प्राजापत्यं समाचरेत्
श्वकाकोच्छिष्टगोच्छिष्टभक्षणे तु त्र्यहं द्विजः १८९
विडालमूषकोच्छिष्टे पञ्चगव्यं पिवेद्द्विजः
शूद्रोच्छिष्टं तथा भुक्त्वा त्रिरात्रेणैव शुध्यति १९०
पलाण्डुलशुनं जग्ध्वा तथैव ग्रामकुक्कुटम्
छत्राकं विड्वराहञ्च चरेच्चान्द्रायणं द्विजः १९१
मानवः श्वखरोष्ट्राणां कपेर्गोमायुकङ्कयोः
प्राश्य मूत्रं पुरीषं वा चरेच्चान्द्रायणव्रतम् १९२

अन्नं पर्य्युषितं भुक्त्वा केशकीटैरुपद्रुतम्
पतितैः प्रेक्षितं वापि पञ्चगव्यं पिवेद्द्विजः १९३
अन्त्यजाभाजने भुक्त्वा ह्युदक्याभाजनेऽपि वा
गोमूत्रयावकाहारी मासार्द्धेन विशुध्यति १९४
गोमांसं मानुषञ्चैव शुनोहस्तात् समाहितम्
अभक्ष्यमेतत् सर्वन्तु भुक्त्वा चान्द्रायणं चरेत् १९५
चाण्डालस्य करे विप्रः श्वपाके पक्वशेऽपि वा
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति १९६
पतितेन सुसम्पर्के मासं मासार्द्धमेव वा
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति १९७
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः
तत्र कार्य्यस्तिलैर्होमो गायत्र्यावर्त्तनं तथा १९८
एष एव मया प्रोक्तः प्रायश्चित्तविधिः शुभः
अनादिष्टेषु पापेषु प्रायश्चित्तं तथोच्यते १९९
दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजोत्तमः
पातकेभ्यः प्रमुच्येत वेदाभ्यासान्न संशयः २००
सुवर्णदानं गोदानं भूमिदानं तथैव च
नाशयन्त्याशु पापानि ह्यन्यजन्मकृतान्यपि २०१
तिलधेनुञ्च यो दद्यात्संयताय द्विजन्मने
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः २०२
माघमासे तु संप्राप्ते पौर्णमास्यामुपोषितः
ब्राह्मणेभ्यस्तिलान् दत्वा सर्वपापैः प्रमुच्यते २०३
उपवासी नरो भूत्वा पौर्णमास्याञ्च कार्त्तिके
हिरण्यं वस्त्रमन्नं वा दत्वा मुच्येत दुष्कृतैः २०४
अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः
एताः प्रशस्तास्तिथयो भानुवारस्तथैव च २०५

अत्र स्नानं जपो होमो ब्राह्मणानाञ्च भोजनम्
उपवासस्तथा दानमेकैकं पावयेन्नरम् २०६
स्नातः शुचिर्धौतवासाः शुद्धात्मा विजितेन्द्रियः
सात्विकं भावमाश्रित्य दानं दद्याद्विचक्षणः २०७
सप्तव्याहृतिभिर्होमो द्विजैः कार्य्यो हितात्मभिः
उपपातकसिद्ध्यर्थं सहस्रपरिसंख्यया २०८
महापातकसंयुक्तो लक्षहोमं सदा द्विजः
मुच्यते सर्वपापेभ्यो गायत्र्याश्चैव जापनात् २०९
अभ्यसेच्च महापुण्यां गायत्रीं वेदमातरम्
गत्वारण्ये नदीतीरे सर्वपापविशुद्धये २१०
स्नात्वा च विधिवत्तत्र प्राणानायम्य वाग्यतः
प्राणायामैस्त्रिभिः पूतो गायत्रीन्तु जपेद्द्विजः २११
अक्लिन्नवासाः स्थलगः शुचौ देशे समाहितः
पवित्रपाणिराचान्तो गायत्र्या जपमारभेत् २१२
ऐहिकामुष्मिकं लोके पापं सर्वं विशेषतः
पञ्चरात्रेण गायत्रीं जपमानो व्यपोहति २१३
गायत्र्यास्तु परं नास्ति शोधनं पापकर्मणाम् २१४
महाव्याहृतिसंयुक्तां प्राणायामेन संयुताम्
गायत्रीं प्रजपन् विप्रः सर्वपापैः प्रमुच्यते २१५
ब्रह्मचारी मिताहारः सर्वभूतहिते रतः
गायत्र्या लक्षजप्येन सर्वपापैः प्रमुच्यते २१६
अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम्
गायत्र्यष्टसहस्रन्तु जप्यं कृत्वा विमुच्यते २१७
अहन्यहनि योऽधीते गायत्रीं वै द्विजोत्तमः
मासेन मुच्यते पापादुरगः कञ्चुकाद्यथा २१८
गायत्रीं यः सदा विप्रो जपते नियतः शुचिः

स याति परमं स्थानं वायुभूतः खमूर्त्तिमान्  २१९
प्रणवेन तु संयुक्ता व्याहृतिः सप्त नित्यशः
गायत्रीं शिरसा सार्द्धं मनसा त्रिः पठेद्द्विजः  २२०
निगृह्य चात्मनः प्राणान् प्राणायामो विधीयते
प्राणायामत्रयं कुर्य्यान्नित्यमेव समाहितः  २२१
मानसं वाचिकं पापं कायेनैव तु यत्कृतम्
तत्सर्वं नश्यते तूर्णं प्राणायामत्रये कृते  २२२
ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापि वा
सामानि सरहस्यानि सर्वपापैः प्रमुच्यते  २२३
पावमानीं तथा कौत्सं पौरुषं सूक्तमेव च
जप्त्वा पापैः प्रमुच्येत पित्र्यञ्च मधुच्छन्दसाम्  २२४
मण्डलं ब्राह्मणं रुद्रसूक्तोक्ताश्च बृहत्कथाः
वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते  २२५
चान्द्रायणन्तु सर्वेषां पापानां पावनं परम्
कृत्वा शुद्धिमवाप्नोति परमं स्थानमेव च  २२६
धर्मशास्त्रमिदं पुण्यं सम्वर्त्तेन तु भाषितम्
अधीत्य ब्राह्मणो गच्छेद्ब्रह्मणः सद्म शाश्वतम्  २२७
इति श्रीसम्वर्त्तेनोक्तं धर्मशास्त्रं समाप्तम्

Reference:

*Smṛti Sandarbha*, Vol. I, (Delhi: Nag, 1981) p. 547.



online Sanskrit books

## अथाष्टाविंशतिः खण्डः

### अथ प्रायश्चित्तवर्णनमुपाकर्मणः फलनिरूपणवर्णनम्

अक्षतास्तु यवाः प्रोक्ता भ्रष्टाधाना भवन्ति ते
भ्रष्टास्तु व्रीहयो लाजा घटाः षण्डिक उच्यते १
नाधीयीत रहस्यानि सोत्तराणि विचक्षणः
नचोपनिषदश्चैव षण्मासान् दक्षिणायनात् २
उपाकृत्योदगयने ततोऽधीयीत धर्मवित्
उत्सर्गश्चैक एवैषां नैष्ट्यं प्रौष्ठपदेऽपि वा ३
अजातव्यञ्जना लोम्नी न तया सह संविशेत्
अयुगूः काकबन्ध्याया जातां तां न विवाहयेत् ४
संसक्तपदविन्यासस्त्रिपदः प्रक्रमः स्मृतः
स्मार्त्ते कर्मणि सर्वत्र श्रौते त्वध्वर्युणोदितः ५
यस्यां दिशि वलिं दद्यात्तामेवाभिमुखो वलिम्
श्रवणाकर्मणि भवेन्यञ्च कर्म न सर्वदा ६
बलिशेषस्य हवनमग्निप्रणयनन्तथा
प्रत्यहं न भवेयातामुल्मुकन्तु भवेत्सदा ७
वृषान्तकप्रेक्षणयोर्नवस्य हविषस्तथा
शिष्टस्य प्राशने मन्त्रस्तत्र सर्वेऽधिकारिणः ८
ब्राह्मणानामसान्निध्ये स्वयमेव पृषातकम्
अवेक्षेद्धविषः शेषं नवयज्ञेऽपि भक्षयेत् ९
सफला बदरीशाखा फलवत्यभिधीयते
धना विधिकताशङ्काः स्मृता जातशिलास्तु ताः १०
नष्टो विनष्टो मणिकः शिलानाशे तथैव च
तदैवाऽऽहृत्य संस्कार्यो न क्षिपेदाग्रहायणीम् ११
श्रवणाकर्म लुप्तञ्चेत्कथञ्चित्सूतकादिना
आग्रहायणिकं कुर्याद्वलिवर्जमशेषतः १२



online Sanskrit books

ऊर्द्ध्वं स्वस्तरशायी स्यान्मासमर्द्धमथापि वा
सप्तरात्रं त्रिरात्रं वा एकां वा सद्य एव वा १३
नोर्द्ध्वं मन्त्रप्रयोगः स्यान्नाग्न्यगारं नियम्यते
नाहतास्तरणञ्चैव न पार्श्वञ्चापि दक्षिणम् १४
दृढश्चेदाग्रहायण्यामावृत्तावपि कर्मणः
कुम्भौ मन्त्रवदासिञ्चेत्प्रतिकुम्भमृचं पठेत् १५
अल्पानां यो विघातः स्यात्स वाधोबहुभिः स्मृतः
प्राणसम्मित इत्यादि वाशिष्ठं बाधितं यथा १६
विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम्
तुल्यप्रमाणकत्वे तु न्याय एवं प्रकीर्तितः १७
त्रैयम्बकं करतलमपूपामण्डकाः स्मृताः
पालाशा गोलकाश्चैव लोहचूर्णञ्च चीवरम् १८
स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि
अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत् १९
इत्यष्टविंशतिः खण्डः

अथैकोनत्रिंशः खण्डः
अथ श्राद्धवर्णनम्

क्षालनं दर्भकूर्चेन सर्वत्र स्रोतसां पशोः
तूष्णीमिच्छाक्रमेण स्याद्द्वपार्थे पार्णदारुणी १
सप्त तावन्मूर्द्धन्यानि तथा स्तनचतुष्टयम्
नाभिः श्रोणिरपानञ्च गोस्रोतांसि चतुर्द्दश २
क्षुरोमांसावदानार्थः कृत्स्ना स्विष्टकृदावृता
वपामादाय जुहुयात्तत्र मन्त्रं समापयेत् ३
हृज्जिह्वा क्रोडमस्थीनि यकृद्वृक्कौ गुदं स्तनाः
श्रोणिस्कन्धसदापार्श्वे पश्वङ्गानि प्रचक्षते ४

एकादशानामङ्गानामवदानानि सङ्ख्यया
पार्श्वस्य वृक्कसक्थ्नोश्च द्वित्वादाहुश्चतुर्दश ५
चरितार्था श्रुतिः कार्या यस्मादप्यनुकल्पतः
अतोह्यार्चेन होमः स्याच्छागपक्षे चरावपि ६
अवदानानि यावन्ति क्रियेरन् प्रस्तरेपशोः
तावतः पायसान् पिण्डान् पश्वभावेऽपि कारयेत् ७
औदनव्यञ्जनार्थन्तु पश्वभावेऽपि पायसम्
सद्रवं श्रपयेत्तद्वदन्वष्टक्येऽपि कर्मणि ८
प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः
गयादौ पिण्डमात्रस्य दीयमानत्वदर्शनात् ९
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः
ब्राह्मणस्य परीक्षायां महायत्नप्रदर्शनात् १०
आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधिः
तदालभ्याप्यनध्यायविधानश्रवणादपि ११
विद्वन्मतमुपादाय ममाप्येतद्धृदि स्थितम्
प्राधान्यमुभयोर्यस्मात्तस्मादेष समुच्चयः १२
प्राचीनावीतिना कार्यं पित्र्येषु प्रोक्षणं पशोः
दक्षिणोद्वासनान्तञ्च चरोर्निर्वपणादिकम् १३
सन्नपश्वावदानानां प्रधानार्थो न हीतरः
प्रधानं हवनञ्चैव शेषं प्रकृतिवद्भवेत् १४
द्वीपमुन्नतमाख्यातं शादा चैवेष्टका स्मृता
कीलिनं सजलं प्रोक्तं दूरखातोदको मरुः १५
द्वारगवाक्षः सन्दर्भैः कर्द्दमभित्यन्तकोण वा
वेधैश्वानष्टं वास्तुघोरं विद्वन्मनाक्रान्तमार्ग्रैश्च १६
वशङ्गमाबिति ब्रीहीञ्छेषश्चेति यवांस्तथा
असावित्यत्र नामोक्त्वा जुहुयात्क्षिप्रहोमवत् १७

साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम्
अर्घ्यं दधिमधुभ्याञ्च मधुपर्को विधीयते १८
कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत् १९

इति कात्यायनविरचिते कर्मप्रदीपे तृतीयः प्रपाठकः

इत्येकोनत्रिंशः खण्डः

समाप्ता चेयं कात्यायनस्मृतिरितिलेख्यंनास्त्यत्र
तस्मादयंग्रन्थः समाप्तोनवेत्यत्रसंदेहः

Reference:
*Smṛti Sandarbha*, Vol. III, (Delhi: Nag, 1981), pp. 1335ff.

# पराशर स्मृतिः

## प्रथमोऽध्यायः

श्रीगणेशायनमः

तत्रादौ धर्मोपदेशं तल्लक्षणञ्चाह

अथातो हिमशैलाग्रे देवदारुवनालये
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा १
मानुषाणां हितं धर्मं वर्तमाने कलौ युगे
शौचाचारं यथावच्च वदसत्यवती सुतः २
तच्छ्रुत्वर्षिवाक्यं तु सशिष्योऽग्न्यर्कसन्निभः
प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः ३
न चाहं सर्वतत्त्वज्ञः कथं धर्मं वदाम्यहम्
अस्मत्पितैवप्रष्टव्येति व्यासः सुतोऽब्रवीत् ४
ततस्तर्षयः सर्वे धर्मतत्त्वार्थकाङ्क्षिणः
ऋषिं व्यासं पुरस्कृत्यगता बदरिकाश्रमम् ५
नाना पुष्पलताकीर्णं फलवृक्षैरलंकृतम्
नदी प्रस्त्रवणोपेतं पुण्यतीर्थोपशोभितं च ६
मृगपक्षिनिनादाढ्यं देवतायतनावृतम्
यक्षगन्धर्वसिद्धैश्च नृत्यगीतैरलंकृतम् ७
तस्मिन्नृषिसभा मध्ये शक्तिपुत्रं पराशरम्
सुखासीनं महातेजा मुनिमुख्यगणावृतम् ८
कृताञ्जलिपुटो भूत्वा व्यासस्त्वृषिभिः सह
प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत् ९
ततः संतुष्टहृदयः पराशरमहामुनिः
आहसुस्वागतं ब्रूहीत्यासीनो मुनिपुङ्गवः १०
कुशलं सम्यगित्युक्त्वा व्यासः पृच्छत्यनन्तरम्
यदि जानासि भक्तिं मे स्नेहाद्वा भक्तवत्सल ११

धर्मकथयमे तातानुग्राह्यो ह्यहं तव
श्रुता मे मानवा धर्मा वासिष्ठा काश्यपास्तथा १२
गर्गेया गौतमीयाश्च तथाच्चोशनसास्मृताः
अत्रेर्विष्णोश्च संवर्तात्दक्षादङ्गिरसस्तथा १३
शातातपाच्च हारीताद्याज्ञवल्क्यात्तथैव च
आपस्तम्बकृता धर्मा शङ्खस्य लिखितस्य च १४
कात्यायनकृताश्चैव तथा प्राचेतसान्मुनेः
श्रुता ह्येते भवत्प्रोक्ताः श्रुत्यर्था मे न विस्मृताः १५
अस्मिन्मन्वन्तरे धर्माः कृतत्रेतादिके युगे
सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे १६
चातुर्वर्ण्यसमाचारं किंचित्साधारणं वद
चतुर्णामपि वर्णानां कर्तव्यं धर्मकोविदैः १७
ब्रूहि धर्मस्वरूपज्ञसूक्ष्मं स्थूलं च विस्तरात्
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः १८
धर्मस्यनिर्णयं प्राहसूक्ष्मं स्थूलं च विस्तरात्
शृणु पुत्रप्रवक्ष्यामि शृण्वन्तु मुनयस्तथा १९
कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः
श्रुतिस्मृतिसदाचारनिर्णेतारश्च सर्वदा २०
न कश्चिद्वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः
तथैवधर्मान्स्मरति मनुः कल्पान्तरेऽन्तरे २१
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे
अन्ये कलियुगे नृणां युगरूपानुसारतः २२
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते
द्वापरे यज्ञमेवाहुः दानमेवकलौ युगे २३
कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः
द्वापरे शाङ्खलिखिताः कलौ पाराशराः स्मृताः २४



online Sanskrit books

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्
द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे २५
कृते सम्भाषणादेवत्रेतायां स्पर्शनेन च
द्वापरे त्वन्नमादायकलौ पतति कर्मणा २६
कृते तात्कालिकः शापः त्रेतायां दशभिर्दिनैः
द्वापरे चैकमासेन कलौ संवत्सरेणतु २७
अभिगम्यकृते दानं त्रेतास्वाहूयदीयते
द्वापरे या च मानायसेवया दीयते कलौ २८
अभिगम्योत्तमं दानमाहूयैव तु मध्यमम्
अधमं या च मानायसेवादानं तु निष्फलम् २९
जितो धर्मो ह्यधर्मेणसत्यं चैवानृतेन च
जिताश्चोरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ ३०
सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति
कुमार्यश्च प्रसूयन्तेऽस्मिन्कलियुगे सदा ३१
कृते त्वस्थि गताः प्राणास्त्रेतायां मांसमाश्रिताः
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः ३२
युगे युगे च ये धर्मास्तत्रतत्रचये द्विजाः
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ३३
युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितम्
पराशरेणचाप्युक्तं प्रायश्चित्तं विधीयते ३४
अहमद्यैवतत्सर्वमनुस्मृत्यब्रवीमि वः
चातुर्वर्ण्यसमाचारं शृण्वन्त्वृषिपुङ्गवाः ३५
पराशरमतं पुण्यं पवित्रं पापनाशनम्
चिन्तितं ब्राह्मणार्थायधर्मसंस्थापनाय च ३६
चतुर्णामपि वर्णानामाचारो धर्मपालकः
आचारभ्रष्टदेहानां भवेद्धर्मः परान्मुखः ३७



online Sanskrit books

षट्कर्माभिरतो नित्यं देवतातिथिपूजकः
हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति ३८
संध्या स्नानं जपो होमो देवतातिथिपूजनम्
आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने ३९
इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डितैववा
सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंग्रमः ४०
दूराध्वोपगतं श्रान्तं वैश्वदेवोपर्स्थितम्
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ४१
नैकग्रामीणमतिथिं संगृह्णीत कदा च न
अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ४२
अतिथिं तत्रसम्प्राप्तं पूजयेत्स्वागतादिना
अर्घ्यासनप्रदानेन पादप्रक्षालनेन च ४३
श्रद्धया चान्न दानेन प्रियप्रश्नोत्तरेण च
गच्छन्तं चानुयानेन प्रीतिमुत्पादयेत्गृही ४४
अतिथिर्यस्यभग्नाशो गृहात्प्रतिनिवर्तते
पितरस्तस्यनाश्नन्ति दशवर्षाणि पञ्च च ४५
काष्ठभारसहस्त्रेणघृतकुम्भशतेन च
अतिथिर्यस्यभग्नाशस्तस्यहोमो निरर्थकः ४६
सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम्
सुक्षेत्रे च सुपात्रे च ह्युप्तं दत्तं न नश्यति ४७
न पृच्छेद्गोत्रचरणे न स्वध्यायं श्रुतं तथा
हृदये कल्पयेद्देवं सर्वदेवमयो हि सः ४८
अपूर्वः सुव्रती विप्रो ह्यपूर्वश्चातितिहिर्यथा
वेदाब्भ्यासरतो नित्यं तावपूर्वौ दिने दिने ४९
वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते
उद्धृत्यवैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ५०



online Sanskrit books

यतिश्च ब्रह्मचारी च पक्वान्न स्वामिनावुभौ
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ५१
दद्याच्च भिक्षा त्रितयं परिव्राड्ब्रह्मचारिणाम्
इच्छया च ततो दद्याद्विभवे सत्यवारितम् ५२
यति हस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम्
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् ५३
यस्यछत्रं हयश्चैव कुञ्जरारोहमृद्धिमत्
ऐन्द्रं स्थानमुपासीततस्मात्तं न विचारयेत् ५४
वैश्वदेवकृतं पापं शक्तो भिक्षुर्व्यपोहितुम्
न हि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति ५५
अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः
सर्वे ते निष्फला ज्ञेयाः पतन्ति नरकेऽशुचौ ५६
वैश्वदेवविहीना ये आतिथ्येन बहिष्कृताः
सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ५७
पापो वा यदि चण्डालो विप्रघ्नः पितृग्घातकः
वैश्वदेवे तु सम्प्राप्तः सोऽअतिथिः स्वर्गसंक्रमः ५८
यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः
वामपादे करं न्यस्य तद्वै रक्षांसि भुञ्जते ५९
अव्रता ह्यनधीयाना यत्रभैक्षचरा द्विजाः
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ६०
क्षत्रियो हि प्रजा रक्षन्शस्त्रपाणिः प्रदण्डवान्
निर्जित्यपरसैन्यानि क्षितिं धर्मेणपालयेत् ६१
पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत्
माला कारेवारामे न यथाङ्गारकारकः ६२
लाभकर्मतथा रत्नं गवां च परिपालनम्
कृषिकर्म च वाणिज्यं वैश्यवृत्तिरुदाहृता ६३



online Sanskrit books

शूद्रस्यद्विजशुश्रूषा परमो धर्मोच्यते
अन्यथा कुरुते किंचित्तद्भवेत्तस्यनिष्फलम्  ६४
लवणं मधुतैलं च दधितक्रं घृतं पयः
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम्  ६५
विक्रीणन्मध्यमांसानि ह्यभक्षस्य च भक्षणम्
कुर्वन्न गम्यागमनं शूद्रः पतति तत्क्षणात्  ६६
कपिलाक्षीरपानेन ब्राह्मणी गमनेन च
वेदाक्षरविचारेणशूद्रश्चाण्डालतां व्रजेत्  ६७

इति पाराशरे धर्मशास्त्रे प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

### गृहस्थाश्रमधर्मवर्णनम्

अतः परं गृहस्थस्य कर्माचारं कलौ युगे
धर्मं साधारणं शक्त्याचातुर्वर्ण्याश्रमागतम्  १
तं प्रवक्ष्याम्यहं पूर्वं पराशरवचो यथा
षट्कर्मसहितो विप्रः कृषिकर्म च कारयेत्  २
क्षुधितं तृषितं श्रान्तं बलीवर्दं न योजयेत्
हीनाङ्गं व्याधितं क्लीबं वृषं विप्रो न वाहयेत्  ३
स्थिराङ्गं बलीवर्दः तृप्तं सुनर्दं षण्ढवर्जितम्
वाहयेद्दिवसस्यार्धं पश्चात्स्नानं समाचरेत्  ४
जप्यं देवार्चनं होमं स्वाध्यायं चैवमभ्यसेत्
एकद्वित्रिचतुर्विप्रान्भोजयेत्स्नातकान्द्विजः  ५
स्वयं कृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः
निर्वपेत्पञ्चयज्ञांश्च क्रतु दीक्षां च कारयेत्  ६
तिला रसा न विक्रेता विक्रेता धान्यतत्समाः
विप्रस्यैवं विधा वृत्तिस्तृणकाष्ठादि विक्रयः  ७

ब्राह्मणश्चेत्कृषिं कुर्यात्तन्महादोषमाप्नुयात्
संवत्सरेणयत्पापं मत्स्यघाती समाप्नुयात् ८
अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली
पाशकोमत्स्य घाती च व्याधः शाकुनिकस्तथा ९
अदाता कर्षकश्चैव सर्वे ते समभागिनः
वृक्षं छित्त्वा महीं भित्वा हत्वा च कृमिकीटकान् १०
कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते
यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागतः ११
स च उरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत्
राज्ञे दत्त्वा तु षड्भागं देवानां चैकविंशकम् १२
विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते
क्षत्रियोऽपि कृषिं कृत्वा देवान्विप्रांश्च पूजयेत् १३
वैश्यः शूद्रस्तथा कुर्यात्कृषिवाणिज्यशिल्पकम्
विकर्मकुर्वते शूद्रा द्विजशुश्रूषयोज्झिताः १४
भवन्त्यल्पायुषस्ते वै निरयं यान्त्यसंशयम्
चतुर्णामपि वर्णानामेषधर्मः सनातनः १५
इति पाराशरे धर्मशास्त्रे द्वितीयोऽध्यायः

## तृतीयोऽध्यायः
## अशौचव्यवस्थावर्णनम्

अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा
दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतके १
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहकैः
शूद्रः शुध्यति मासेन पराशरवचो यथा २
उपासने तु विप्राणामङ्गशुद्धिश्च जायते
ब्राह्मणानां प्रसूतौ तु देवस्पर्शे विधीयते ३

जातौ विप्रो दशाहेन द्वादशाहेन भूमिपः
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ४
एकाहाच्छुध्यते विप्रो योऽग्नि वेदसमन्वितः
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ५
जन्मकर्मपरिभ्रष्टः संध्योपासन वर्जितः
नामधारकविप्रस्तु दशाहं सूतकी भवेत् ६
एकपिण्डास्तु दायादाः पृथग्दारनिकेतनाः
जन्मन्यपि विपत्तौ च तेषां तत्सूतकं भवेत् ७
तावत्तत्सूतकं गोत्रे चतुर्थपुरुषेणतु
दायाद्विच्छेदमाप्नोति पञ्चमो वात्मवंशजः ८
चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात् ९
भृग्वग्निमरणे चैव देशान्तरमृते तथा
बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयते १०
देशान्तरमृतः कश्चित्सगोत्रः श्रूयते यदि
न त्रिरात्रमहो रात्रं सद्यः स्नात्वा शुचिर्भवेत् ११
देशान्तरगतो विप्रः प्रयासात्कालकारितात्
देहनाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि १२
कृष्णाष्टमी त्वमावास्या कृष्णा चैकादशी च या
उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत् १३
अजातदन्ता ये बाला ये च गर्भाद्विनिहृसृताः
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया १४
यदि गर्भो विपद्येतस्रवते वापि योषितः
यावन्मासं स्थितो गर्भो दिनं तावत्तु सूतकम् १५
आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः
अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् १६

दन्तजातेऽनुजाते च कृतचूडे च संस्थिते
अग्निसंस्करणे तेषां त्रिरात्रमशुचिर्भवेत् १६
आदन्तजन्मनः सद्या चूडान्नैषिकी स्मृता
ट्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् १७
ब्रह्मचारी गृहे येषां हूयते च हुताशनः
सम्पर्कं न च कुर्वन्ति न तेषां सूतकं भवेत् १८
सम्पर्काद्दुष्यते विप्रो जनने मरणे तथा
सम्पर्काच्च निवृत्तस्यन प्रेतं नैव सूतकम् १९
शिल्पिनः कारुका वैद्यादासीदासाश्च नापिताः
राजानः श्रोत्रियाश्चैव सद्यः शौचाः प्रकीर्तिताः २०
सव्रतः सत्रपूतश्चाहिताग्निश्च यो द्विजः
राज्ञश्च सूतकं नास्ति यस्यचेच्छति पार्थिवः २१
उद्यतो निधने दाने आर्तो विप्रो निमन्त्रितः
तदर्षिभिर्दृष्टं यथाकालेन शुध्यति २२
प्रसवे गृहमेधी तु न कुर्यात्संकरं यदि
दशाहाच्छुध्यते माता त्ववगाह्यपिता शुचिः २३
सर्वेषां शावमाशौचं माता पित्रोस्तु सूतकम्
सूतकं मातुरेवस्यादुपस्पृश्यपिताशुचिः २४
यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः
सूतकं तु भवेत्तस्ययदि विप्रः षडङ्गवित् २५
सम्पर्काज्ञायते दोषो नान्यो दोषोऽस्ति वै द्विजे
तस्मात्सर्वप्रयत्नेन सम्पर्कं वर्जयेद्बुधः २६
विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके
पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति २७
अन्तरा दशाहस्यपुनर्मरणजन्मनी
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् २८



online Sanskrit books

ब्राह्मणार्थे विपन्नानां बन्दिगोग्रहणे तथा
आहवेषु विपन्नानामेकरात्रमशौचम्  २९
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ
परिव्राडयोगयुक्तश्चरणे चाभिमुखो हतः  ३०
यत्रयत्रहतः शूरः शत्रुभिः परिवेष्टितः
अक्षयांलभते लोकान्यदि क्लीबं न भाषते  ३१
सन्नयस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः
एषमे मण्डलं भित्त्वा परं स्थानं प्रयास्यति  ३२
यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः
परित्राता यदा गच्छेत्सच क्रतु फलं लभेत्  ३३
यस्यछेदक्षतं गात्रं शरमुद्गरयष्टिभिः
देवकन्यास्तु तं वीरं हरन्ति रमयन्ति च  ३४
देवाङ्गनासहस्राणि शूरमायोधने हतम्
त्वरमाणाः प्रधावन्ति ममभर्ता ममेति च  ३५
यं यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणो वात्रयथा यान्ति
क्षणेन यान्त्येवहि तत्रवीराः प्राणान्सुयुद्धेन परित्यजन्तः  ३६
जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गनाः
क्षणध्वंसिनिकायेऽस्मिन्का चिन्ता मरणे रणे  ३७
ललाटदेशे रुधिरं स्रवच्च यस्याहवे तु प्रविशेच्च वक्त्रम्
तत्सोमपानेन किलास्यतुल्यं संग्रामयज्ञे विधिवच्च दृष्टम्  ३८
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते  ३९
न तेषामशुभं किंचित्पापं वा शुभकर्मणाम्
जलावगाहनात्तेषां सद्यः शौचं विधीयते  ४०
असतोरमबन्धुं च प्रेतीभूतं द्विजोत्तमम्
वहित्वा च दहित्वा च प्राणायामेन शुध्यति  ४१



online Sanskrit books

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेववा
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्यविशुध्यति ४२
क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ४३
शवं च वैश्यमज्ञानाद्ब्राह्मणे योऽनुगच्छति
कृत्वाशौचं द्विरात्रं च प्राणायामान्षडाचरेत् ४४
प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ४५
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्
प्राणायामशतं कृत्वा घृतं प्राश्यविशुध्यति ४६
विनिर्वर्त्ययदाशूद्रोदकान्तमुपस्थितः
द्विजैस्तदानुगन्तव्यैषधर्मः सनातनः ४७
इति पाराशरे धर्मशास्त्रे तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

## अनेकविधप्रकरणप्रायश्चित्तम्

अतिमानादतिक्रोधात्स्नेहाद्वा यदिवा भयात्
उद्बध्नीयात्स्त्रीपुमान्वा गतिरेषा विधीयते १
पूयशोणितसम्पूर्णे त्वन्धे तमसि मज्जति
षष्ठीर्वर्षसहस्राणि नरकं प्रतिपद्यते २
नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत्
वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ३
तप्तकृच्छ्रेणशुध्यन्तीत्येवमाहप्रजापतिः
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ४
संस्पृशन्ति तु ये विप्रा वो ढारश्चाग्निदाश्च ये
अन्ये ये वानुगन्तारः पाशच्छेदकराश्च ये ५

तप्तकृच्छ्रेणशुद्धास्ते कुर्युर्ब्राह्मणभोजनम्
अनडुत्सहितां गां च दद्युर्विप्रायदक्षिणाम्  ६
त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत्
त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षो दिनत्रयम्  ७
षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत्
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते  ८
यो वै समाचरेद्विप्रः पतितादिष्वकामतः
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा  ९
मासार्धं मासमेकं वा मासद्वयमथापि वा
अब्दार्धमब्दमेकं वा तदूर्ध्वं चैव तत्समः  १०
त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्
तृतीये चैव पक्षे तु कृच्छ्रं सांतपनं चरेत्  ११
चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे मतः
कुर्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम्  १२
शुद्ध्यर्थमष्टमे चैव षण्मासान्कृच्छ्रमाचरेत्
पक्षसंख्या प्रमाणेन सुवर्णान्यपिदक्षिणा  १३
ऋतुस्नाता तु या नारीभर्तारं नोपसर्पति
सा मृता नरकं याति विधवा च पुनः पुनः  १४
ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति
घोरायां भ्रूणहत्यायां युज्यते नात्रसंशयः  १५
दरिद्रं व्याधितं मूर्खं भर्तारं यावमन्यते
सा शुनी जायते मृत्वा सूकरी च पुनः पुनः  १६
पत्यौ जीवति या नार्युपोष्यव्रतमाचरेत्
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत्  १७
अपृष्ट्वा चैव भर्तारं या नारी कुरुते व्रतम्
सर्वं तद्राक्षसान्गच्छेदित्येवं मनुरब्रवीत्  १८

बान्धवानां सजातीनां दुर्वृत्तं कुरुते तु या
गर्भपातं च याकुर्यान्नतां सम्भाषयेत्क्वचित् १९
यत्पापं ब्रह्महत्यायां द्विगुणं गर्भपातने
प्रायश्चित्तं न तस्याः स्यात्तस्यास्त्यागो विधीयते २०
न कार्यमावसथेन नाग्निहोत्रेणवा पुनः
सभवेत्कर्मचाण्डालो यस्तु धर्मपरान्मुखः २१
ओघवाताहृतं बीजं यस्यक्षेत्रे प्ररोहति
सक्षेत्री लभते बीजं न बीजीभागमर्हति २२
तद्वत्परस्त्रियाः पुत्रौद्वौस्मृतौ कुण्डगोलकौ
पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः २३
औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः
दद्यान्मातापितावापि सपुत्रो दत्तको भवेत् २४
परिवित्तिः परिवेत्ता यया च परिविद्यते
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः २५
द्वौ कृछ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्रैव च
कृछ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत् २६
कुब्जवामनषण्ढेषु गद्गदेषु जडेषु च
जात्यन्धे बधिरे मूके न दोषः परिवेदने २७
पितृव्यपुत्रः सापत्नः परनारी सुतस्तथा
दाराग्निहोत्रसम्योगे न दोषः परिवेदने २८
ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैवकारयेत्
अनुज्ञातस्तु कुर्वीतशङ्खस्यवचनं यथा २९
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ३०
मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ३१



online Sanskrit books

तिस्रः कोटय़ोऽर्धकोटी च यानि रोमाणि मानुषे
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ३२
व्यालग्राही यथाव्यालं बलादुद्धरते बिलात्
एवं स्त्रीपतिमुद्धृत्य तेनैव सह मोदते ३३
इति पाराशरे धर्मशास्त्रे चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः
प्रायश्चित्तवर्णनम्

वृकश्वानसृगालाद्यैर्दष्टो यस्तु द्विजोत्तमः
स्नात्वा जपेत्सगायत्रीं पवित्रां वेदमातरम् १
गवां शृङ्गोदकैः स्नानं महानद्योस्तु संगमे
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् २
वेदविद्या व्रतस्नातः शुना दष्टो द्विजो यदि
सहिरण्योदकैः स्नात्वा घृतं प्राश्यविशुध्यति ३
सव्रतस्तु शुना दष्टो यस्त्रिरात्रमुपावसेत्
घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ४
अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः
प्रणिपत्यभवेत्पूतो विप्रैश्चक्षुर्निरीक्षितः ५
शुना घ्रातावलीढस्यनखैर्विलिखितस्य च
अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम् ६
शुना तु ब्राह्मणी दष्टा जम्बुकेन वृकेणवा
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ७
कृष्णपक्षे यदा सोमो न दृश्येतकदाचन
यां दिशं व्रजते सोमस्तां दिशं वावलोकयेत् ८
असद्ब्राह्मणके ग्रामे शुना दष्टो द्विजोत्तमः
वृषं प्रदक्षिणी कृत्यसद्यः स्नात्वा शुचिर्भवेत् ९

चण्डालेन श्वपाकेन गोभिर्विप्रैर्प्रहतो यदि
आहिताग्निर्मृतो विप्रो विषेणात्महतो यदि १०
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम्
स्पृष्ट्वा वोढ्वा च दग्ध्वा च सपिण्डेषु च सर्वथा ११
प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात्
दग्धास्थीनि पुनर्गृह्यक्षीरैः प्रक्षालयेद्द्विजः १२
पुनर्दहेत्स्वाग्निना तु स्वतन्त्रेण पृथक्पृथक्
आहिताग्निर्द्विजः कश्चित्प्रवसन्कालचोदितः १३
देहनाशमनुप्राप्तस्तस्याग्निर्वसते गृहे
प्रेताग्निहोत्रसंस्कारः श्रूयतामृषिपुङ्गवाः १४
कृष्णाजिनं समास्तीर्यकुशैस्तु पुरुषाकृतिम्
षट्शतानि शतं चैव पलाशानां च वृन्ततः १५
चत्वारिंशच्छिरे दद्याच्छतं कण्ठे तु विन्यसेत्
बाहुभ्यां शतकं दद्यादङ्गुलीषु दशैवतु १६
शतं तु जघने दद्याद्द्विशतं तूदरे तथा
दद्यादष्टौ वृषणयोः पञ्चमेध्रे तु विन्यसेत् १७
एकविंशतिमूरुभ्यां द्विशतं जानुजङ्घयोः
पादाङ्गुलीषु षड्दद्याद्यज्ञपात्रं ततो न्यसेत् १८
शम्यं शिश्ने विनिःक्षिप्यारणीं मुष्कयोरपि
जुहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत् १९
कर्णे चोलूखलं दद्या पृष्ठे च मुसलं न्यसेत्
उरसि क्षिप्यदृषदं तण्डुलाज्यतिलान्मुखे २०
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थलीं तु चक्षुषोः
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत् २१
अग्निहोत्रोपकरणमशेषं तत्रनिक्षिपेत्
असौ स्वर्गायलोकायस्वाहेत्येकाहुतिं सकृत् २२



online Sanskrit books

दद्यात्पुत्रोऽथवा भ्राताप्यन्यो वापि च बान्धवः
यथा दहनसंस्कारस्तथा कार्यं विचक्षणैः २३
ईदृशं तु विधिं कुर्याद्ब्रह्मलोकगतिः स्मृता
दहन्ति ये द्विजास्तं तु ते यान्ति परमां गतिम् २४
अन्यथा कुर्वते कर्मत्वात्मबुद्ध्या प्रचोदिताः
भवन्त्यल्पायुषस्ते वै पतन्ति नरकेऽशुचौ २५
इति पाराशरे धर्मशास्त्रे पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

### प्राणिहत्याप्रायश्चित्तवर्णनम्

अतः परं प्रवक्ष्यामि प्राणि हत्यासु निष्कृतिम्
पराशरेन पूर्वोक्ता मन्वर्थेऽपि च विस्तृताम् १
क्रौञ्चसारसहंसांश्च चक्रवाकं च कुक्कुटम्
जालपादं च शरभमहो रात्रेणशुध्यति २
बलाकाटिट्टिभौ वापि शुकपारावतावपि
अहि न क्रविघाती च शुध्यते नक्तभोजनात् ३
वृककाककपोतानां शारि तित्तिरिघातकः
अन्तर्जलोभे संध्ये प्राणायामेन शुध्यति ४
गृध्रश्येन शशादानामुलूकस्य च घातकः
अपक्वाशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ५
वल्गुणी टिट्टिभानां च कोकिलाखञ्जरीटके
लाविकारक्तपक्षेषु शुध्यते नक्तभोजनात् ६
कारण्डवचकोराणां पिङ्गलाकुररस्य च
भारद्वाजादिकं हत्वा शिवं पूज्यविशुध्यति ७
भेरुण्डचाषभासांश्च पारावतकपिञ्जलौ
पक्षिणां चैव सर्वेषामहो रात्रमभोजनम् ८

हत्वा मूषकमार्जारसर्पाजगरडुराडुभान्
कृसरं भोजयेद्विप्रांलोहदराडस्यदक्षिणा ६
शिशुमारं तथागोधां हत्वा कूर्मं च शल्यकम्
वृन्ताकफलभक्षीचाप्यहो रात्रेराशुध्यति १०
वृकजम्बूकऋक्षाणां तरक्षश्वानघातकः
तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् ११
गजस्यचतुरङ्गस्यमहिषोष्ट्रनिपातने
प्रायश्चित्तमहो रात्रं त्रिसंध्यमवगाहनम् १२
कुरङ्गं वानरं सिंहं चित्रं व्याघ्रं तु घातयन्
शुध्यते सत्रिरात्रेराविप्राणां तर्पणेन च १३
मृगरोहिद्वराहाणामवेर्बस्तस्यघातकः
अफालकृष्टमश्नीयादहो रात्रमुपोष्यसः १४
एवं चतुष्पदानां च सर्वेषां वनचारिणाम्
अहो रात्रोषितस्तिष्ठेज्जपेद्वै जातवेदसम् १५
शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत्
प्राजापत्यद्वयं कृत्वा वृषैकादशदक्षिणा १६
वैश्यं वा क्षत्रियं वापि निर्दोषं योऽभिघातयेत्
सोऽपि कृच्छ्रद्वयं कुर्याद्गो विंशद्दक्षिणं ददेत् १७
वैश्यं शूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमम्
हत्वा चान्द्रायणं तस्यत्रिंशद्गोश्चैव दक्षिणाम् १८
चराडालं हतवान्कश्चिद्ब्राह्मणे यदि कंचन
प्राजापत्यं चरेत्कृच्छ्रं गो द्वयं दक्षिणां ददत् १९
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेणवा
चराडालस्यवधे प्राप्ते कृच्छ्रार्धेन विशुध्यति २०
चोरौ श्वपाकचराडालौ विप्रेणाभिहतौ यदि
अहो रात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति २१



online Sanskrit books

चोरौ श्वपाकचराडालौ विप्रेणाभिहतौ यदि
अहो रात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति २२
चराडालैः सहसुप्तं तु त्रिरात्रमुपवासयेत्
चराडालैकपथं गत्वा गायत्री स्मरणाच्छुचिः २३
चराडालदर्शने सद्यादित्यमवलोकयेत्
चराडालस्पर्शने चैव सचैलं स्नानमाचरेत् २४
चराडालखातवापीषु पीत्वा सलिलमग्रजः
अज्ञानाच्चैकभक्तेन त्वहो रात्रेणशुध्यति २५
चराडालभाराडसंस्पृष्टं पीत्वा कूपगतं जलम्
गो मूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् २६
चराडालघटसंस्थं तु यत्तोयं पिबति द्विजः
तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् २७
यदि नक्षिपते तोयं शरीरे यस्यजीर्यति
प्राजापत्यं न दातव्यं कृच्छ्रं सांतपनं चरेत् २८
चरेत्सांतपनं विप्रः प्राजापत्यमनन्तरः
तदर्धं तु चरेद्वैश्यः पादं शूद्रस्तदाचरेत् २९
भाराडस्थमन्त्यजानां तु जलं दधिपयः पिबेत्
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ३०
ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः
शूद्रस्यचोपवासेन तथा दानेन शक्तितः ३१
भुङ्क्तेऽज्ञानाद्द्विजश्रेष्ठश्चराडालान्नं कथंचन
गोमूत्रयावकाहारो दशरात्रेणशुध्यति ३२
एकैकं ग्रासमश्नीयाद्गोमूत्रयावकस्य च
दशाहं नियमस्थस्यव्रतं तत्तु विनिर्दिशेत् ३३
अविज्ञानातस्तु चराडालो यत्रवेश्मनि तिष्ठति
विज्ञाते तूपसन्नस्य द्विजाः कुर्वन्त्यनुग्रहम् ३४

मुनिवक्त्रोद्गतान्धर्मान्गायन्तो वेदपारगाः
पतन्तमुद्धरेयुस्तं धर्मज्ञाः पापसंकरात् ३५
दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकम्
भुञ्जीतसहसर्वैश्च त्रिसंध्यमवगाहनम् ३६
त्र्यहं भुञ्जीतदध्ना च त्र्यहं भुञ्जीतसर्पिषा
त्र्यहं क्षीरेणभुञ्जीतैकैकेन दिनत्रयम् ३७
भावदुष्टं न भुञ्जीतनोच्छिष्टं कृमिदूषितम्
दधिक्षीरस्यत्रिपलं पलमेकं घृतस्यतु ३८
भस्मना तु भवेच्छुद्धिरुभयोस्ताम्रकांस्ययोः
जलशौचेन वस्त्राणां परित्यागेन मृणमयम् ३९
कुसुम्भगुडकार्पासलवणं तैलसर्पिषी
द्वारे कृत्वा तु धान्यानि दद्याद्वेश्मनि पावकम् ४०
एवं शुद्धस्ततः पश्चात्कुर्याद्ब्राह्मणतर्पणम्
त्रिंशतं गोवृषं चैकं दद्याद्विप्रेषु दक्षिणाम् ४१
पुनर्लेपनखातेन होमजप्येन शुध्यति
आधारेणच विप्राणां भूमिदोषो न विद्यते ४२
चण्डालैः सहसम्पर्कं मासं मासार्धमेववा
गोमूत्रयावकाहारो मासार्धेन विशुध्यति ४३
रजकी चर्मकारी च लुब्धकी वेणुजीविनी
चातुर्वर्ण्यस्य च गृहे त्वविज्ञाता तु तिष्थति ४४
ज्ञात्वा तु निष्कृतिं कुर्यात्पूर्वोक्तस्यार्धमेव च
गृहदाहं न कुर्वीतशेषं सर्वं च कारयेत् ४५
गृहस्याभ्यन्तरं गच्छेच्चण्डालो यदि कस्यचित्
तमगाराद्विनिर्वास्यमृद्भाण्डं तु विसर्जयेत् ४६
रसपूर्णं तु यद्भाण्डं न त्यजेत्तु कदाचन
गोमयेन तु सम्मिश्रैर्जलैः प्रोक्षेद्गृहं तथा ४७

ब्राह्मणस्यव्रणद्वारे पूयशोणितसम्भवे
कृमिरुत्पद्यते यस्यप्रायश्चित्तं कथं भवेत् ४८
गवां मूत्रपुरीषेणदध्ना क्षीरेणसर्पिषा
त्र्यहं स्नात्वा च पीत्वा च कृमि दुष्टः शुचिर्भवेत् ४९
क्षत्रियोऽपि सुवर्णस्यपञ्चमाषान्प्रदायतु
गोदक्षिणां तु वैश्यस्याप्युपवासं विनिर्दिशेत् ५०
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति
अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ५१
प्रणम्यशिरसा ग्राह्यमग्निष्टोमफलं हि तत्
जपच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ५२
सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम्
व्याधि व्यसनिनि श्रान्ते दुर्भिक्षे डामरे तथा ५३
उपवासो व्रतं होमो द्विजसम्पादितानि वै
अथवा ब्राह्मणास्तुष्टाः सर्वं कुर्वन्त्यनुग्रहम् ५४
सर्वान्कामानवाप्नोति द्विजसम्पादितैरिह
दुर्बलेऽनुग्रहः प्रोक्तस्तथा वै बालवृद्धयोः ५५
अतोऽन्यथा भवेद्दोषः तस्मान्नानुग्रहः स्मृतः
स्नेहाद्वा यदिवा लोभाद्भयादज्ञानतोऽपि वा ५६
कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति
शरीरस्यात्यये प्राप्ते वदन्ति नियमं तु ये ५७
महत्कार्योपरोधेन न स्वस्थस्यकदाचन
स्वस्थस्यमूढाः कुर्वन्ति वदन्त्यनियमं तु ये ५८
ते तस्यविघ्नकर्तारः पतन्ति नरकेऽशुचौ
स्वयमेवव्रतं कृत्वा ब्राह्मणं योऽवमन्यते ५९
वृथा तस्योपवासः स्यान्न सपुण्येन युज्यते
सैवनियमो ग्राह्यो यद्येकोऽपि वदेद्द्विजः ६०

कुर्याद्वाक्यं द्विजानां त्वन्यथा भ्रूणहा भवेत्
ब्राह्मणा जङ्गमं तीर्थं तीर्थभूता हि साधवः ६१
तेदां वाक्योदकेनैवशुध्यन्ति मलिना जनाः
ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ६२
सर्वदेवमयो विप्रो न तद्वचनमन्यथा
उपवासो व्रतं चैव स्नानं तीर्थं जपस्तपः ६३
विप्रसम्पादितं यस्यसम्पूर्णं तस्यतत्फलम्
अन्नाद्ये कीटसम्युक्ते मक्षिका केशदूषिते ६४
तदन्तरा स्पृशेच्चापस्तदन्नं भस्मना स्पृशेत्
भुञ्जानश्चैव यो विप्रः पादं हस्तेन संस्पृशेत् ६५
स्वमुच्छिष्टमसौ भुङ्क्ते पाणिना मुक्तभाजने
पादुकास्थो न भुञ्जीतपर्यङ्के संस्थितोऽपि वा ६६
श्वानचण्डालदृष्टौ च भोजनं परिवर्जयेत्
यदन्नं प्रतिषिद्धं स्यादन्नशुद्धिस्तथैव च ६७
यथा पराशरेणोक्तं तथैवाहं वदामि वः
शृतं द्रोणाढकस्यान्नं काकश्वानोपघातितम् ६८
केनेदं शुध्यते चेति ब्राह्मणेभ्यो निवेदयेत्
काकश्वानावलीढं तु द्रोणान्नं न परित्यजेत् ६९
वेदवेदाङ्गविद्विप्रैर्धर्मशास्त्रानुपालकैः
प्रस्था द्वात्रिंशतिर्द्रोणः स्मृतो द्विप्रस्थाढकः ७०
ततो द्रोणाढकस्यान्नं श्रुतिस्मृतिविदो विदुः
काकश्वानावलीढं तु गवाघ्रातं खरेणवा ७१
स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढके भवेत्
अन्नस्योद्धृत्यतन्मात्रं यच्चलाला हतं भवेत् ७२
सुवर्णोदकमभ्युक्ष्यहुताशेनैवतापयेत्
हुताशनेन संस्पृष्टं सुवर्णसलिलेन च ७३

विप्राणां ब्रह्मघोषेणभोज्यं भवति तत्क्षणात्
स्नेहो वा गोरसो वापि तत्रशुद्धिः कथं भवेत् ७४
अल्पं परित्यजेत्तत्रस्नेहस्योत्पवनेन च
अनलज्वालया शुद्धिर्गोरसस्यविधीयते ७५
इति पाराशरे धर्मशास्त्रे षष्ठोऽध्यायः

## अथ सप्तमोऽध्यायः
### द्रव्यशुद्धिवर्णनम्

अथातो द्रव्यशुद्धिस्तु पराशरवचो यथा
दारवाणां पात्राणां तक्षणाच्छुद्धिरिष्यते १
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति
रजसा शुध्यते नारी विकलं या न गच्छति २
नदी वेगेन शुध्येतलोपो यदि न दृश्यते
वापी कूपतडागेषु दूषितेषु कथंचन ३
उद्धृत्यवैघटशतं पञ्चगव्येन शुध्यति
अष्टवर्षा भवेद्गौरी न ववर्षा तु रोहिणी ४
दशवर्षा भवेत्कन्यात ऊर्ध्वं रजस्वला
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ५
मासिमासिरजस्तस्याः पिबन्ति पितरः स्वयम्
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ६
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्
यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ७
असम्भाष्यो ह्यपाङ्क्तेयः सविप्रो वृषली पतिः
यः करोत्येकरात्रेणवृषली सेवनं द्विजः ८
सभैक्षभुग्जपन्नित्यं त्रिर्वर्षैर्विशुध्यति
अस्तं गते यदा सूर्ये चण्डालं पतितं स्त्रियम् ९

सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते
जातवेदः सुवर्णं च सोममार्गं विलोक्य च १०
ब्राह्मणानुमतश्चैव स्नानं कृत्वा विशुध्यति
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी ब्राह्मणी तथा ११
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैवशुध्यति
स्पृष्ट्त्वा रजस्वलान्योन्यं ब्राह्मणी क्षत्रिया तथा १२
अर्धकृच्छ्रं चरेत्पूर्वा पादमेकमनन्तरा
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजा तथा १३
पादहीनं चरेत्पूर्वा पादमेकमनन्तरा
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा १४
कृच्छ्रेणशुध्यते पूर्वा शूद्रा दानेन शुध्यति
स्नाता रजस्वलाया तु चतुर्थेऽहनि शुध्यति १५
कुर्याद्रजोनिवृत्तौ तु दैवपित्र्यादि कर्म च
रोगेणयद्रजः स्त्रीणामन्वहं तु प्रवर्तते १६
नाशुचिः सा ततस्तेन तत्स्याद्वैकालिकं मतम्
साध्वाचारा न तावत्स्याद्रजो यावत्प्रवर्तते १७
रजोनिवृत्तौ गम्या स्त्रीगृहकर्मणि चैव हि
प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी १८
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति
आतुरे स्नानोत्पन्ने दशकृत्वो ह्यनातुरः १९
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्सातुरः
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेणवा द्विजः २०
उपोष्यरजनीमेकां पञ्चगव्येन शुध्यति
अनुच्छिष्टेन शूद्रेणस्पर्शे स्नानं विधीयते २१
तेनोच्छिष्टेन संस्पृष्टः प्राजापत्यं समाचरेत्
भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते २२



online Sanskrit books

सुरा मात्रेणसंस्पृष्टं शुध्यतेऽग्न्युपलेखनैः
गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च २३
शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्ट्नि यानि च
गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने २४
षण्मासान्भुविनिःक्षिप्योद्धृत्यपुनराहरेत्
आयसेष्वायसानां च सीसस्याग्नौ विशोधनम् २५
डन्तमस्थि तथा भृङ्गं रूप्यं सौवर्णभाजनम्
मणिपाषाणपात्राणीत्येतान्प्रक्षालयेज्जलैः २६
पाषाणे तु पुनर्घर्षः शुद्धिरेवमुदाहृता
मृण्मये दहनाच्छुद्धिर्धान्यानां मार्जनादपि २७
वेणुवल्कलचीराणां क्षौमकार्पासवाससाम्
और्णनेत्रपटानां च प्रोक्षणाच्छुद्धिरिष्यते २८
मुञ्जोपस्करशूर्पाणां शणस्यफलचर्मणाम्
तृणकाष्ठस्यरज्जूणामुदकाभ्युक्षणं मतम् २९
तूलिकाद्युपधानानि रक्तवस्त्रादिकानि च
शोषयित्वातपेनैवप्रोक्षणाच्छुद्धितामियुः ३०
मार्जारमक्षिका कीटपतङ्गकृमिदर्दुराः
मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं मनुरब्रवीत् ३१
महीं स्पृष्ट्वागतं तोयं याश्चाप्यन्योन्यविप्रुषः
भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत् ३२
ताम्बूलेक्षु फले चैव भुक्तस्नेहानुलेपने
मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः ३३
रथ्या कर्दमतोयानि नावः पन्थास्तृणानि च
मारुतार्केणशुध्यन्ति पक्वेष्टकचितानि च ३४
अदुष्टा संतता धारा वातोद्धूताश्चरेणवः
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ३५

देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि
रक्षेदेवस्वदेहादि पश्चाद्धर्मं समाचरेत्  ३६
येन केन च धर्मेण मृदुना दारुणेन वा
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्  ३७
आपत्काले तु निस्तीर्णे शौचाचारं तु चिन्तयेत्
शुद्धिं समुद्धरेत्पश्चात्स्वस्थो धर्मं समाचरेत्  ३८
इति पाराशरे धर्मशास्त्रे सप्तमोऽध्यायः

अष्टमोऽध्यायः
धर्माचरणवर्णनम्

गवां बन्धनयोक्त्रेषु भवेन्मृत्युरकामतः
अकामकृतपापस्यप्रायश्चित्तं कथं भवेत्  १
वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम्
स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत्  २
सावित्र्याश्चापि गायत्र्याः संध्योपास्त्यग्निकार्ययोः
अज्ञानात्कृषिकर्तारो ब्राह्मणानामधारकाः  ३
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्
सहस्रशः समेतानां परिषत्त्वं न विद्यते  ४
यद्वदन्ति तमो मूढा मूर्खा धर्ममतद्विदः
तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति  ५
अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः
प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदि व्रजेत्  ६
चत्वारो वा त्रयो वापि यं ब्रूयुर्वेदपारगाः
सधर्मेति विज्ञेयो नेतरैस्तु सहस्रशः  ७
प्रमाणमार्गं मार्गन्तो ये धर्मं प्रवदन्ति वै
तेषामुद्विजते पापं सद्भूतगुणवादिनाम्  ८



online Sanskrit books

यथाश्मनि स्थितं तोयं मारुतार्केण शुध्यति
एवं परिषदादेशान्नाशयेत्तस्यदुष्कृम् ९
नैवगच्छति कर्तारं नैवगच्छति पर्षदम्
मारुतार्कादि सम्योगात्पापं नश्यति तोयवत् १०
चत्वारो वा त्रयो वापि वेदवन्तोऽग्निहोत्रिणः
ब्राह्मणां समर्था ये परिषत्साभिधीयते ११
अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः
पञ्चत्रयो वा धर्मज्ञाः परिषत्सा प्रकीर्तिता १२
मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम्
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् १३
पञ्चपूर्वं मया प्रोक्तास्तेषां चासम्भवे त्रयः
स्ववृत्तिपरितुष्टो ये परिषत्सा प्रकीर्तिता १४
अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः
परिषत्त्वं नतेष्वस्ति सहस्रगुणितेष्वपि १५
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः
ब्राह्मणस्त्वनधीयानस्त्रयस्ते नामधारकाः १६
ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः
यथा हुतमनग्नौ चामन्त्रो ब्राह्मणस्तथा १७
यथा षण्ढोऽफलः स्त्रीषु यथा गौरूषराफला
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः १८
चित्रकर्मयथानेकैरङ्गैरुन्मील्यते शनैः
ब्राह्मण्यमपि तद्वद्धि संस्कारैर्मन्त्रपुर्वकैः १९
प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः
ते द्विजा पापकर्माणः समेता नरकं ययुः २०
ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये
त्रैलोक्यं तारयन्त्येते पञ्चेन्द्रियरतापि २१



online Sanskrit books

सम्प्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः
एवं च वेदविद्विप्रः सर्वभक्षोऽपि दैवतम् २२
अमेध्यानि तु सर्वाणि प्रक्षिप्यन्ते यथोदके
तथैवकिल्बिषं सर्वं प्रक्षिपेच्च द्विजानले २३
गायत्री रहितो विप्रः शूद्रादप्यशुचिर्भवेत्
गारत्री ब्रह्मतत्त्वज्ञाः सम्पूज्यन्ते जनैर्द्विजाः २४
दुह्शीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः
कः परित्यज्यगां दुष्टां दुहेच्छीरवतीं खरीम् २५
धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः
क्रीड्रथमपि यद्ब्रूयुः सधर्मः परमः स्मृतः २६
चातुर्वेद्यो विकल्पी चाङ्गविद्धर्मपाठकः
त्रयश्चाश्रमो मुख्याः पर्षदेषा दशावरा २७
राज्ञश्चानुमते स्थित्वा प्रायश्चितं विनिर्दिशेत्
स्वयमेवन कर्तव्यं कर्तव्या स्वल्पनिष्कृतिः २८
ब्राह्मणांस्तानतिक्रम्यराजा कर्तुं यदिच्छति
तत्पापं शतधा भूत्वा राजानमनुगच्छति २९
प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः
आत्मकृच्छ्रं ततः कृत्वा जपेद्वै वेदमातरम् ३०
सशिखं वपनं कृत्वा त्रिसंध्यमवगाहनम्
गवां मध्ये वसेद्रात्रौ दिवा गाश्चाप्यनुव्रजेत् ३१
उष्णे वर्षति शीते वा मारुते वाति वा भृशम्
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ३२
आत्मनो यदि वान्येषां गृहे क्षेत्रे खलेऽथवा
भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् ३३
पिबन्तीषु पिबेत्तोयं संविशन्तीषु संविशेत्
पतितां पङ्कमग्नां वा सर्वप्राणैः समुद्धरेत् ३४



online Sanskrit books

ब्राह्मणार्थे गवार्थे वा यस्तु प्राणान्परित्यजेत्
मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च  ३५
गोधनस्यानुरूपेणप्राजापत्यं विनिर्दिशेत्
प्राजापत्यं ततः कृच्छ्रं विभजेत्तच्चतुर्विधम्  ३६
एकाहमेकभक्ताशी एकाहं नक्तभोजनः
अयाचिताश्येकमहरेकाहं मारुताशनः  ३७
दिनद्वयं चैकभक्तो द्विदिनं चैकभोजनः
दिनद्वयमयाचीस्याद्द्विदिनं मारुताशनः  ३८
त्रिदिनं चैकभक्ताशी त्रिदिनं नक्तभोजनः
दिनत्रयमयाची स्यात्त्रिदिनं मारुताशनः  ३९
चतुरहं चैकभक्ताशी चतुरहं नक्तभोजनः
चतुर्दिनमयाची स्याच्चतुरहं मारुताशनः  ४०
प्रायश्चित्ते ततचीर्णे कुर्याद्ब्राह्मणभोजनम्
विप्राणां दक्षिणां दद्यात्पवित्राणि जपेद्द्विजः  ४१
ब्राह्मणान्भोजयित्वा तु गोघ्नः शुद्धो न संशयः  ४२
इति पाराशरे धर्मशास्त्रेऽष्टमोऽध्यायः

## नवमोऽध्यायः

### गोसेवोपदेशवर्णनम्

गवां समरक्षणार्थाय न दुष्येद्रोधबन्धयोः
तद्वधं तु नतं विद्यात्कामाकामकृतं तथा  १
दण्डादूर्ध्वं यदन्येन प्रहाराद्यदि पातयेत्
प्रायश्चित्तं तदा प्रोक्तं द्विगुणं गोवधे चरेत्  २
रोधबन्धनयोक्त्राणि घातश्चेति चतुर्विधम्
एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत्  ३
योत्रेषु पादहीनं स्याच्चरेत्सर्वं निपातने

गोवाटे वा गृहेए वापि दुर्गे वाप्यसमस्थले ४
नदीष्वथसमुद्रेषु त्वन्येषु न नदी मुखे
दग्धदेशे मृता गावः स्तम्भनाद्रोधोच्यते ५
योक्त्रदामकदोरैश्च कराढाभरणभूषणैः
गृहे वापि वने वापि बद्धा स्याद्गश्रोर्मृता यदि ६
तदेवबन्धनं विद्यात्कामाकामकृतं च यत्
हले वा शकटे पङ्क्तौ पृष्ठे वा पीडितो नरैः ७
गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तद्विधः
मत्तः प्रमत्तोन्मत्तश्चेतनो वाप्यचेतनः ८
कामाकामकृतक्रोधो दराडैर्हन्यादथोपलैः
प्रहृता वा मृता वापि तद्धि हेतुर्निपातने ९
मूर्छितः पतितो वापि दराडेनाभिहितः सतु
उत्थितस्तु यदा गच्छेत्पञ्चसप्तदशैववा १०
ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद्यदि
पूर्वं व्याध्युपसृष्टश्चेत्प्रायश्चित्तं न विद्यते ११
पिराडस्थे पादमेकं तु द्वौ पादौ गर्भसम्मिते
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् १२
पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च
त्रिपादे तु शिखा वर्जं सशिखं तु निपातने १३
पादे वस्त्रयुगं चैव द्विपादे कांस्यभाजनम्
त्रिपादे गोवृषं दद्याच्चतुर्थे गोद्वयं स्मृतम् १४
निष्पन्न सर्वगात्रस्तु दृश्यते वा सचेतनः
अङ्गप्रत्यङ्गसम्पूर्णो द्विगुणं गोव्रतं चरेत् १५
पाषाणेनाथदराडेन गावो येनाभिघातिताः
शृङ्गभङ्गे चरेत्पादं द्वौ पादौ नेत्रघातने १६
पाषाणेनाथदराडेन गावो येनाभिघातिताः



online Sanskrit books

शृङ्गभङ्गे चरेत्पादं द्वौ पादौ नेत्रघातने १७
लाङ्गूले पादकृच्छ्रं तु द्वौ पादावस्थिभञ्जने
त्रिपादं चैव कर्णे तु चरेत्सर्वं निपातने १८
शृङ्गभङ्गेऽस्थि भङ्गे चकटि भङ्गे तथैव च
यदि जीवति षण्मासान्प्रायश्चित्तं न विद्यते १९
व्रणभङ्गे च कर्तव्यः स्नेहाभ्यङ्गस्तु पाणिना
यवसश्चोपहर्तव्यो यावद्दृढबलो भवेत् २०
यावत्सम्पूर्णसर्वाङ्गस्तावत्तं पोषयेन्नरः
गोरूपं ब्राह्मणस्याग्रे नमस्कृत्वा विसर्जयेत् २१
यद्यसम्पूर्णसर्गाङ्गो हीनदेहो भवेत्तदा
गोघातकस्यतस्यार्थं प्रायश्चित्तं विनिर्दिशेत् २२
काष्ठलोष्टकपाषाणैः शस्त्रेणैवोद्धतो बलात्
व्यापादयति यो गां तु तस्यशुद्धिं विनिर्दिशेत् २३
चरेत्सांतपनं काष्ठे प्राजापत्यं तु लोष्टके
तप्तकृच्छ्रं तु पाषाणे सस्त्रे चैवातिकृच्छ्रकम् २४
पञ्चसंतपने गावः प्राजापत्ये तथा त्रयः
तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश २५
प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः २६
अन्यत्राङ्कनलक्ष्मभ्यां वाहने मोचने तथा
सायं संगोपनार्थं च न दुष्येद्रोधबन्धयोः २७
अतिदाहेऽतिवाहे च नासिका भेदने तथा
नदी पर्वतसंचारे प्रायश्चित्तं विनिर्दिशेत् २८
अतिदाहे चरेत्पादं द्वौ पादौ वाहने चरेत्
नासिक्ये पदहीनं तु चरेत्सर्वं निपातने २९
दहानात्तु विपद्यतेऽनड्वान्योक्त्रयन्त्रितः

उक्तं पराशरेणैवह्येकपादं यथा विधि ३०
रोधनं बन्धनं चैव भारः प्रहरणं तथा
दुर्गप्रेरणयोक्त्रं च निमित्तानि वधस्यषट् ३१
बन्धपाशसुगुप्ताङ्गो म्रियते यदि गोपशुः
भवने तस्यपापी स्यात्प्रायश्चित्तार्धमर्हति ३२
न नारि केलैर्न च शाणवालैः न वापि मौञ्जैर्न च वल्कशृङ्खलैः
एतैस्तु गावो न निबन्धनीया बद्धवापि तिष्ठेत्परशुं गृहीत्वा ३३
कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्
पाशलग्नाग्निदग्धासु प्रायश्चित्तं न विद्यते ३४
यदि तत्रभवेत्काष्ठं प्रायश्चित्तं कथं भवेत्
जपित्वा पावनीं देवीं मुच्यते तत्रकिल्बिषात् ३५
प्रेरयन्कूपवापीषु वृक्षच्छेदेषु पातयन्
गवाशनेषु विक्रीणंस्ततः प्राप्नोति गोवधम् ३६
आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत्
श्रवणं हृदयं भिन्नं मग्नो वा कूपसंकटे ३७
कूपादुत्क्रमणे चैव भग्नो वा ग्रीवपादयोः
सैवम्रियते तत्रत्रीन्पादांस्तु समाचरेत् ३८
कूपखाटे तटाबन्धे नदी बन्धे प्रपासु च
पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते ३९
कूपखाते तटा खाते दीर्घखाते तथैव च
अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते ४०
वेश्मद्वारे निवासेषु यो नरः खातमिच्छति
स्वकार्यगृहखतेषु प्रायश्चित्तं विनिर्दिशेत् ४१
निशिबन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च
अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते ४२
ग्रामघाते शरौघेणवेश्मभङ्गान्निपातने



online Sanskrit books

अतिवृष्टि हतानां च प्रायश्चित्तं न विद्यते ४३
संग्रामे प्रहतानां च ये दग्धा वेश्मकेषु च
दावाग्नि ग्रामघातेषु प्रायश्चित्तं न विद्याते ४४
यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने
यत्ने कृते विपद्येतप्रायश्चित्तं न विद्र्यते ४५
व्यापन्नानां बहूनां च बन्धने रोधनेऽपि वा
भिषन्मिथ्योपचारे च प्रायश्चित्तं विनिर्दिशेत् ४६
गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः
अनिवारयतां तेषां सर्वेषां पातकं भवेत् ४७
एको हतो यैर्बहुभिः समेतैर्न ज्ञायते यस्यहतोऽभिघातात्
दिव्येन तेषामुपलभ्यहन्ता निवर्तनीयो नृपसन्नियुक्तैः ४८
एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता यदि
पादं पादं तु हत्यायाश्चरेयुस्ते पृथक्पृथक् ४९
हते तु रुधिरं दृश्यं व्याधि ग्रस्तः कृशो भवेत्
लाला भवति दष्टेष्वेवमन्वेषणं भवेत् ५०
ग्रासार्थं चोदितो वाप्यध्वानं नैवगच्छति
मनुना चैवमेकेन सर्वशास्त्राणि जानता ५१
प्रायश्चित्तं तु तेनोक्तं गोघ्नश्चान्द्रायणं चरेत्
केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ५२
द्विगुणे व्रतादिष्टे द्विगुणा दक्षिणा भवेत्
राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ५३
अकृत्वा वपनं तस्यप्रायश्चित्तं विनिर्दिशेत्
सर्वान्केशान्समुद्धृत्यछेदयेदङ्गुलद्वयम् ५४
एवं नारी कुमारीणां शिरसो मुण्डनं स्मृतम्
न स्त्रियाः केशवपनं न दूरे शयनाशनम् ५५
न च गोष्ठे वसेद्रात्रौ न दिवा गानुव्रजेत्

नदीषु संगमे चैवारगयेषु विशेषतः ५६
न स्त्रीणामजिनं वासो व्रतमेवसमाचरेत्
त्रिसंध्यं स्नानमित्युक्तं सुराणामर्चनं तथा ५७
बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम्
गृहेषु सततं तिष्ठेच्छुचिर्नियममाचरेत् ५८
इहयो गोवधं कृत्वा प्रछादयितुमिच्छति
सयाति नरकं घोरं कालसूत्रमसंशयम् ५९
विमुक्तो नरकात्तस्मान्मर्त्यलोके प्रजायते
क्लीबो दुःखी च कुष्ठी च सप्तजन्मानि वै नरः ६०
तस्मातर्पकाशयेत्पापं स्वधर्मं सततं चरेत्
स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विवर्जयेत् ६१
इति पाराशरे धर्मशास्त्रे नवमोऽध्यायः

## दशमोऽध्यायः

### अगम्यागमनप्रायश्चित्तवर्णनम्

चातुर्वर्ग्येषु सर्वेषु हितां वक्ष्यामि निष्कृतिम्
अगम्या गमने चैव शुद्ध्यै चान्द्रायणं चरेत् १
एकैकं ह्रासयेद्ग्रासं कृष्णे शुल्के च वर्धयेत्
अमावास्यां न भुञ्जीतह्येषचान्द्रायणो विधिः २
कुक्कुटाराडा प्रमाणं तु ग्रासं वै परिकल्पयेत्
अन्याथा भावदोषेण न धर्मो न च शुध्यति ३
प्रायश्चित्तं ततश्चीर्णे कुर्याद्ब्रह्मणभोजनम्
गोद्वयं वस्त्रयुग्मं च दद्याद्विप्रेषु दक्षिणाम् ४
चराडालीं वा श्वपाकीं वा ह्यभिगच्छति यो द्विजः
त्रिरात्रमुपवासित्वा विप्राणामनुशासनम् ५
सशिखं पवनं कृत्वा प्राजापत्यद्वयं चरेत्



online Sanskrit books

गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ६
क्षत्रियो वाथवैश्यो वा चण्डालीं गच्छतो यदि
प्राजापत्यद्वयं कुर्याद्दद्याद्गोमिथुन द्वयम् ७
श्वपाकीं वाथचण्डालीं शूद्रो वा यदि गच्छति
प्राजापत्यं चरेत्कृच्छ्रं चतुर्गोमिथुनं ददेत् ८
मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा
एतास्तु मोहितो गत्वा त्रीणि कृच्छ्राणि संचरेत् ९
चान्द्रायणत्रयं कुर्याच्छिश्नच्छेदेन शुध्यति
मातृष्वसृगमे चैवमात्ममेध्रनिकर्तनम् १०
अज्ञानेन तु यो गच्छेत्कुर्याच्चान्द्रायणद्वयाम्
दशगोमिथुनं दद्याच्छुद्धिं पारशरोऽब्रवीत् ११
पितृदारान्समारुह्यमातुराप्तां तु भ्रातृजाम्
गुरुपात्नीं स्नुषां चैव भ्रातृभार्यां तथैवच १२
मातुलानीं सगोत्रां च प्राजापत्यत्रयं चरेत्
गोद्वयं दक्षिणां दद्याच्छुध्यते नात्रसंशयः १३
पशुवेष्यादि गमने महिष्युष्ट्री कपीस्तथा
खरीं च सूकरीं गत्वा प्राजापत्यव्रतं चरेत् १४
गोगामी च त्रिरात्रेणगामेकां ब्राह्मणे ददन्
महिष्युष्ट्री खरी गामी त्वहो रात्रेणशुध्यति १५
डामरे समरे वापि दुर्भिक्षे वा जनक्षये
बन्दिग्राहे भयार्ता वा सदा स्वस्त्रीं निरीक्षयेत् १६
चण्डालैः सहसम्पर्कं या नारी कुरुते ततः
विप्रान्दशवरान्कृत्वा स्वकं दोषं प्रकाशयेत् १७
आकण्ठसम्मिते कूपे गोमयोदककर्दमे
तत्रस्थित्वा निराहारा त्वहो रात्रेणनिष्क्रमेत् १८
सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम्

त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत् १९
शंखपुष्पी लतामूलं पत्रं वा कुसुमं फलम्
सुवर्णं पञ्चगव्यंच क्वाथयित्वा पिबेज्जलम् २०
एकभक्तं चरेत्पश्चाद्यावत्पुष्पवती भवेत्
व्रतं चरति तद्यावत्तावत्संवसते बहिः २१
प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजानम्
गोद्वयं दक्षिणां दद्यच्छुद्धिं पाराशरोऽब्रवीत् २२
चातुर्वर्णयस्यनारीणां कृच्छ्रं चान्द्रायणं व्रतम्
यथा भूमिस्तथा नारी तस्मात्तां न तु दूषयेत् २३
बन्दिग्राहेणया भुक्ता हत्वा बद्ध्वा बलाद्भयात्
कृत्वा सांतपनं कृच्छ्रं शुध्येत्पाराशरोऽब्रवीत् २४
सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः
प्राजापत्येन शुध्येतर्तु प्रस्त्रवणेन च २५
पतत्यर्धं शरीरस्ययस्यभार्यासुरां पिबेत्
पतितार्धशरीरस्यनिष्कृतिर्न विधीयते २६
गायत्रीं जपमानस्तु कृच्छ्रं सांतपनं चरेत्
गायत्रीं गोमयं क्षीरं दधिसर्पिः कुशोदकम् २७
एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम्
जारेण जनयेद्गर्भं मृतेऽव्यक्ते गते पतौ २८
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम्
ब्राह्मणी तु यदा गच्छेत्परपुंसा समन्विता २९
सा तु नष्टा विनिर्दिष्टा न तस्यागमनं पुनः
कामान्मोहात्तु या गच्छेत्त्यक्त्वा बन्धून्सुतान्पतिम् ३०
सा तु नष्टा परे लोके मानुषेषु विशेषतः
मदमोहगता नारी क्रोधाद्दण्डादिताडिता ३१
अद्वितीया गता चैव पुनरागमनं भवेत्

दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ३२
दशाहं न त्यजेन्नारीं त्यजेन्नष्टश्रुतां तथा
भर्ता चैव चरेत्कृच्छ्रं कृच्छार्धं चैव बान्धवाः ३३
तेषां भुक्त्वा च पीत्वा चाहो रात्रेणशुध्यति
ब्राह्मणी तु यदा गच्छेत्परपुंसा विवर्जिता ३४
गत्वा पुंसां शतं याति जयेयुस्तां तु गोत्रिणः
पुंसो यदि गृहे गच्छेत्तदशुद्धं गृहं भवेत् ३५
पतिमातृगृहं यच्च जारस्यैवतु तद्गृहम्
उल्लिख्यतद्गृहं पश्चात्पञ्चगव्येन सेचयेत् ३६
त्यजेच्च मृण्मयं पात्रं वस्त्रं काष्ठं च शोधयेत्
सम्भारान्पञ्चगव्येन सर्वान्गोबालैश्च फलोद्भवान् ३७
ताम्राणि पञ्चगव्येन कांस्यानि दशभस्मभिः
प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम् ३८
गोद्वयं दक्षिणां दद्यात्प्राजापत्यद्वयं चरेत्
इतरेषामहो रात्रं पञ्चगव्यं च शोधनम् ३९
उपवासैर्व्रतैः पुण्यैः स्नानसंध्यार्च नादिभिः
जपहोमदया दानैः शुध्यन्ते ब्राह्मणादयः ४०
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम्
न प्रदुष्यन्ति दर्भाश्च यज्ञेषु चमसा यथा ४१
इति पाराशरे धर्मशास्त्रे दशमोऽध्यायः

## एकादशोऽध्यायः
## अभक्ष्यभक्षणप्रायश्चित्तवर्णनम्

अमेध्यरेतो गोमांसं चण्डालान्नमथापि वा
यदि भुक्तं तु विप्रेणकृच्छ्रं चान्द्रायणं चरेत् १

तथैवक्षत्रियो वैश्योऽप्यर्धं चान्द्रायणं चरेत्
शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत् २
पञ्चगव्यं पिबेच्छूद्रो ब्रह्मकूर्चं पिबेद्द्विजः
एकद्वित्रिचतुर्गा वा दद्याद्विप्राद्यनुक्रमात् ३
शूद्रान्नं सूतकान्नं चाभोज्यस्यान्नमेव च
शङ्कितं प्रतिषिद्धान्नं पूर्वोच्छिष्टं तथैव च ४
यदि भुक्तं तु विप्रेणाज्ञानादापदापि वा
ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चं तु पावनम् ५
बालैर्न कुलमार्जारैरन्नमुच्छिष्टं यदा
तिलदर्भोदकैः प्रोक्ष्यशुध्यते नात्रसंशयः ६
एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ७
मोहाद्भुञ्जीतयस्तत्रपङ्क्तावुच्छिष्टभोजने
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सांतपनं तथा ८
पीयूषं श्वेतलशुनं वृन्ताकफलगृञ्जने
पलाण्डुवृक्षनिर्यासदेवस्वकवकानि च ९
उष्ट्रीक्षीरमविक्षीरमज्ञानाद्भुञ्जते द्विजः
त्रिरात्रमुपवासेन पञ्चगव्येन शुध्यति १०
मण्डूकं भक्षयित्वा तु मूषिकामांसमेव च
ज्ञात्वा विप्रस्त्वहो रात्रं यावकान्नेन शुध्यति ११
क्षत्रियश्चापि वैश्यश्च क्रियावन्तौ शुचिव्रतौ
तद्गृहे तु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः १२
घृतं तैलं तथा क्षीरं भक्ष्यं स्नेहेन पाचितम्
गत्वा नदी तटे विप्रो भुञ्जीयाच्छूद्रभोजनम् १३
मद्यमांसरतं नित्यं नीचकर्मप्रवर्तकम्
तं शूद्रं वर्जयेद्विप्रः श्वपाकमिवदूरतः १४



online Sanskrit books

द्विजशुश्रूषणरतान्मद्यमांसविवर्जितान्
स्वकर्मणि रतान्नित्यं नतान्शूद्रान्त्यजेद्द्विजः १५
अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् १६
गायत्र्यष्टसहस्रेणशुद्धिः स्याच्छूद्रसूतके
वैश्ये पञ्चसहस्रेण त्रिसहस्रेणक्षत्रिये १७
ब्राह्मणस्ययदा भुङ्क्ते द्वे सहस्रे तु दापयेत्
अथवा वामदैव्येन साम्नैवैकेन शुध्यति १८
शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मनागतम्
पक्वं विप्रगृहे भुक्तं भोज्यं तन्मनुरब्रवीत् १९
आपत्कालेषु विप्रेणभुक्तं शूद्रगृहे यदि
मनस्तापेन शुध्येतद्द्रुपदां वा जपेच्छतम् २०
दासनापितगो पालकुलमित्रार्धसीरिणः
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् २१
शूद्रकन्या समुत्पन्ने ब्राह्मणेन तु संस्कृतः
संस्कारात्तु भवेद्दासः असंस्काराात्तु नापितः २२
क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः
सगोपालेति ज्ञेयो भोज्यो विप्रैर्नसंशयः २३
वैश्यकन्या समुत्पन्नो ब्राह्मणेन तु संस्कृतः
साह्यार्धिकेति ज्ञेयो भोज्यो विप्रैर्न संशयः २४
भाण्डस्थितमभोज्येषु जलं दधिघृतं पयः
अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् २५
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वोपसर्पति
ब्रह्मकूर्चोपवासेन याज्यवर्णस्यनिष्कृतिः २६
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति
ब्रह्मकूर्चमहो रात्रं श्वपाकमपि शोधयेत् २७

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्
निर्दिष्टं पञ्चगव्यं तु पवित्रं पापशोधनम् २८
गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयम्
पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि २९
कपिलायाघृतं ग्राह्यं सर्वं कापिलमेववा
मूत्रमेकपलं दद्यादङ्गुष्ठार्धं तु गोमयम् ३०
क्षीरं सप्तपलं दद्याद्दधित्रिपलमुच्यते
घृतमेकपलं दद्यात्पलमेकं कुशोदकम् ३१
गायत्र्यादायगोमूत्रं गन्धद्वारेति गोमयम्
आप्यायस्वेतिचक्षीरं दधिक्राव्णस्तथा दधि ३२
तेजोऽसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम्
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ३३
आपो हि ष्ठेति चालोड्यमानस्तोकेति मन्त्रयेत्
सप्तावरास्तु ये दर्भाछिन्नाग्राः शुकत्विषः ३४
एतैरुद्धृत्यहोतव्यं पञ्चगव्यं यथा विधि
इरावतीदं विष्णुर्मानस्तोकेति शंवती ३५
एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः
आलोड्यप्रणवेनैवनिर्मन्थ्यप्रणवेन तु ३६
उद्धृत्यप्रणवेनैवपिबेच्च प्रणवेन तु
यत्त्वस्थिगतं पापं देहे तिष्ठति देहिनाम् ३७
ब्रह्मकूर्चो दहेत्सर्वं प्रदीप्ताग्निरिवेन्धनम्
पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम् ३८
वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः
दध्निवायुः समुद्दिष्टः सोमः क्षीरे घृते रविः ३९
पिबतः पतितं तोयं भाजने मुखनिहसृतम्
अपेयं तद्विजानीयात्पीत्वा चान्द्रायणं चरेत् ४०

कूपे च पतितं दृष्ट्वा श्वसृगालौ च मर्कटम्
अस्थिचर्मादिपतितं पीत्वामेध्यापो द्विजः ४१
नारं तु कुणपं काकं विड्वराहखरोष्ट्रकम्
गावयं सौप्रतीकं च मायूरं खाड्गकं तथा ४२
वैय्याघ्रमार्क्षं सैंहं वा कूपे यदि निमज्जति
तटाकस्याथदुष्टस्यपीतं स्यादुदकं यदि ४३
प्रायश्चित्तं भवेत्पुंसः क्रमेणैतेन सर्वशः
विप्रः शुध्येत्त्रिरात्रेणक्षत्रियस्तु दिनद्वयात् ४४
एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यति
परपाकनिवृत्तस्यपरपाकरतस्य च ४५
अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत्
अपचस्य च यद्दानं दातुश्चास्य कुतः फलम् ४६
दाताप्रतिग्रहीता च तौ द्वौ निरयगामिनौ
गृहीत्वाग्निं समारोप्यपञ्च यज्ञान्न निर्वपेत् ४७
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः
पञ्चयज्ञान्स्वयं कृत्वा परान्नेनोपजीवति ४८
सततं प्रातरुत्थायपरपाकरतस्तु सः
गृहस्थधर्मा यो विप्रो ददाति परिवर्जितः ४९
ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्तितः
युगे युगे तु धर्मास्तेषु तेषु च ये द्विजाः ५०
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः
हुं कारं ब्राह्मणस्योक्त्वा त्वं कारं च गरीयसः ५१
स्नात्वा तिष्ठन्नहः शेषमभिवाद्यप्रसादयेत्
ताडयित्वा तृणेनापि कण्ठे बद्ध्वापि वाससा ५२
विवादेनापि निर्जित्यप्रणिपत्यप्रसादयेत्
अवगूर्यत्वहो रात्रं त्रिरात्रं क्षितिपातने ५३

अतिकृच्छ्रं च रुधिरे कृच्छ्रोऽभ्यन्तरशोणिते
न वाहमतिकृच्छ्री स्यात्पाणिपूरान्न भोजनः ५४
त्रिरात्रमुपवासी स्यादतिकृच्छ्रः सोच्यते
सर्वेषामेवपापानां संकरे समुपस्थिते ५५
दशसाहस्रमभ्यस्ता गायत्री शोधनं परम् ५६
इति पाराशरे धर्मशास्त्रे एकादशोऽध्यायः

द्वादशोऽध्यायः

तत्रादौ--पुनः संस्कारादिप्रायश्चित्तवर्णनम्
दुःस्वप्नं यदि पश्येत्तु वान्ते तु क्षुरकर्मणि
मैथुने प्रेतधूमे च स्नानमेवविधीयते १
अज्ञानात्प्राश्यविण्मूत्रं सुरा संस्पृष्टमेव च
पुनः संस्कारमर्हन्ति त्रयोवर्णा द्विजातयः २
अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च
निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ३
विण्मूत्रभोजी शुध्यं प्राजापत्यं समाचरेत्
पञ्चगव्यं च कुर्वीतस्नात्वा पीत्वा शुचिर्भवेत् ४
जलाग्निपतने चैव प्रव्रज्यानाशकेषु च
प्रत्यावसितवर्णानां कथं शुद्धिर्विधीयते ५
प्राजपत्यद्वयेनैवतीर्थाभिगनमेन च
वृषैकादशदानेन वर्णाः शुध्यन्ति ते त्रयः ६
ब्राह्मणस्यप्रवक्ष्यामि वनं गत्वा चतुष्पथे
सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् ७
गोद्वयं दक्षिणां दद्याच्छुद्धिं स्वायम्भुवोऽब्रवीत्
मुच्यते तेन पापेन ब्राह्मणत्वं च गच्छति ८
स्नानानि पञ्चपुन्यानि कीर्तितानि मनीषिभिः

